स्तरामिदं वाक्यं वक्तुं प्रचक्रमे । इक्ष्वाकुवंश्यो नृपाणां ककुद ककुत्स्थ इत्याहितलक्षणोऽभूत् । यत उन्नतेच्छा उत्तरकोसलेन्द्राः श्लाघ्यं काकुत्स्थशब्दं दधति । तस्य कुले दिलीपो नामोरुकीर्तिः कुलप्रदीपो नृपतिर्जातो यः शक्राभ्यसूयाविनिवृत्तय एकोनशत-क्रतुत्वेऽतिष्ठत् । तस्य पुत्रो रघुर्नाम महाक्रतोर्विश्वजितः प्रयोक्ता पैत्र्यं पदं प्रशास्ति यश्चतुर्दिगावर्जितसम्भृतां विभूतिं मृत्पात्रशेषामकरोत् । त्रिविष्टपस्य पतिं जयन्त इवासौ कुमारोऽजो नाम तमनुजातः । दम्यो योऽजो भुवनस्य गुर्वीं धुरं धुर्येण पित्रा सदृशं बिभर्ति । कुलेन कान्त्या नवेन वयसा विनयप्रधानैस्तैस्तैर्गुणैश्चात्मनस्तुल्यममुं त्वं वृणीष्व, रत्नं काञ्चनेन समागच्छत्विति । ततः सुनन्दावचना-वसाने नरेन्द्रकन्या लज्जां तनूकृत्य प्रसादामलया दृष्ट्या संवरण-स्रजेव कुमारं प्रत्यग्रहीत् । तथागतायामिन्दुमत्यां सखी सुनन्दा परिहासपूर्वमावभाषे । आर्ये व्रजामोऽन्यत इति । इन्दुमती चैनाम-सूयाकुटिलं ददर्श । सा मूर्तमनुरागमिव चूर्णगौरं गुणं धात्रीक-राभ्यां रघुनन्दनस्य कण्ठे यथाप्रदेशमासञ्जयामास । तत्र स्वयंवरे समगुणयोगप्रीतयः पौरा अन्येषां नृपाणां श्रवणकटूकवाक्यं वि-वव्रुः । इयमिन्दुमती मेघमुक्तं शशिनमुपगता कौमुदी, अनुरूपं जलधिमवतीर्णा जह्नुकन्येति ॥

Raghuvaṁs'a VI.

---

## X.

## STORY OF SUPA'RAGA.

बोधिसत्त्वः किल महासत्त्वः परमनिपुणमतिर्नौकर्णधारो बभूव । एष हि धर्मो बोधिसत्त्वानां यद्यं यं शास्त्रातिशयं जिज्ञासन्ते कला-

विशेषं वा तस्मिंस्तस्मिन् भवन्ति मेधावितरा जगतः । अथ स महात्मा विदितज्योतिर्गतित्वाद्दिग्विभागेष्वसंमूढमतिः परिज्ञातनियतागन्तुकौत्पातिकानिमित्तः कालाकालक्रमकुशलो मीनतोयवर्णभौमप्रकारशकुनिपर्वतादिभिश्चिह्नैः सूपलक्षितसमुद्रदेशः स्मृतिमान्विजिततन्द्रानिद्रः शीतोष्णवर्षादिपरिखेदसहिष्णुरप्रमादी धृतिमानाहरणापहरणकुशलत्वादीप्सितं देशं प्रापयिता वणिजामासीत् । तस्य परमसिद्धयात्रत्वात्सुपारग इत्येव नाम बभूव । तदध्युषितं च पत्तनं सुपारगमित्येवाख्यातमासीत् । यदेतर्हि सूपारगमिति ज्ञायते । सोऽपि मङ्गलसंमतत्वाद्वृद्धत्वेऽपि सांयात्रिकैर्यात्रासिद्धिकामैर्वहनमभ्यर्थनसत्कारपुरःसरमारोप्यते स्म । अथ कदाचिद्भरुकच्छादभिप्रयाताः सुवर्णभूमिवणिजो यात्रासिद्धिकामाः सुपारगं पत्तनमुपेत्य तं महासत्त्वं वहनारोहणार्थमभ्यर्थयामासुः । स तानुवाच । जरया संह्रियमाणदर्शनेन प्रतनुस्मृतिना स्वदेहकृत्येऽप्यवसन्नविक्रमेण मया किं बहु साहाय्यं कर्तव्यमिति । वणिज ऊचुः । विदितैयमस्माकं युष्मच्छरीरावस्था । नैव वयं कर्मविनियोगेन युष्मानायासयितुमिच्छामः, किं तर्हि, युष्मत्पादपङ्कजसमाश्रयसत्कृतेन रजसा मङ्गल्यतामुपगतेयं नौरमुष्मिंस्तोयनिधौ स्वस्ति व्रजेदिति भवन्तमुपागताः स्म इति ।

अथ स महात्मा तेषामनुकम्पया जराशिथिलशरीरोऽपि तद्वहनमारुरोह । तदधिरोहणाच्च प्रमुदितमनसस्ते सर्व एव वणिजो बभूवुर्नियतमस्माकमुत्तमा यात्रासिद्धिरिति । क्रमेण चावजगाहिरे विविधमीनकुलविचरितम्, अनिभृतजलकलकलारावम्, अनिलबलविलासप्रविचलिततरङ्गम्, बहुविधरत्नैर्भूमिविशेषैरर्पितरङ्गम्, फेनावलीकुसु-

मद्दामविचित्रम्, अप्रमेयतोयं महासमुद्रम् । ततश्चेन्द्रनीलप्रकराभिनीलं सूर्यांशुतापाद्विलीनमाकाशमिव समन्ततोऽन्तर्हिततीरलेखमगाधमम्भोनिधिमध्यमीयुः । तेषां तत्रानुप्राप्तानां सायाह्नसमये मृदूभूतकिरणचक्रप्रभावे सवितरि महदौत्पातिकं परमभीषणं प्रादुरासीत् । तथा हि । विभिद्यमानोर्मिविकीर्णफेनश्चण्डानिलास्फालनभीमनादः क्षणेन सागरो रौद्रोऽभवत् । विद्युल्लतोद्भासुरलोलजिह्वाः प्रसक्तभीमस्तनितानुनादाः पयोदा नैकशीर्षा नीला भुजङ्गा इवादित्यपथमावव्रुः । अविरलवारिधाराशरैराच्छुरितोर्मिचक्रे महोदधौ रोषादिव समुत्पतति सा नौर्भीतेवाभ्यधिकमकम्पत ।

अथ ते सांयात्रिकाः पवनवलमथितसलिलवेगवशगया नावा परिभ्रम्यमाणा बहुभिरप्यहोभिर्नैव कुतश्चित्तीरं ददृशुर्न च यथेप्सितानि समुद्रचिह्नानि । अपूर्वैरेव तु समुद्रचिह्नैरभिवर्धमानवैमनस्या भयविषादव्याकुलतामुपजग्मुः । अथैतान्सुपारगो बोधिसत्त्वो व्यवस्थापयन्नुवाच । किमत्र चित्रं यद्भवन्तः खलु महासमुद्रमध्यमवगाढा औत्पातिकक्षोभेण परिक्लिश्यन्ते । तथाप्यलं विषादेन । कुतः ।

विषादो नापत्प्रतीकारस्योपायः। कार्यप्रतिपत्तिदक्षा धैर्यमवलम्ब्य कृच्छ्राण्यप्यनायासेनैव समुत्तरन्ति । तस्मादलं दैन्यपरिग्रहेण यथाधिकारमवहिता भवन्तु भवन्त इति। एवं तेन महात्मना समाश्वासिता अपि कूलदर्शनोत्सुकमतयः समुद्रे पुरुषविग्रहानामुक्तरूप्यकवचानुन्मज्जतो निमज्जतश्च कांश्चिदपश्यन् । तान्दृष्ट्वा भीतैर्वणिग्भिः पृष्टः सुपारग उवाच । नैते मानुषा अमानुषा वा । मीनाः खल्वेते । न भेतव्यमेभ्यः । किं तु पत्तनद्वितयादपि वयं सुदूरमपकृष्टाः स्मः । तस्मान्निवर्तितुं यतध्वमिति । चण्डवेगवाहिना सलिलनिवहेनैकान्त-

हरेण च पाश्चात्त्येन वायुना समाक्षिप्तया नावा न ते सांयात्रिकाः शेकुर्निवर्तितुम् । अथावगाहमानाः क्रमेण रूप्यप्रभावभासितमनील-फेननिचयपाण्डुरमपरं समुद्रमालोक्य सविस्मयाः सुपारगमूचुः । कोऽयं शुक्लदुकूलवानिव महार्णव इति । सुपारग उवाच । कष्टं भोः कष्टम् । सुदूरं खल्ववगाह्यते । असौ क्षीरार्णव इति ख्यात उदधिः । निवर्तितुं चेच्छक्यते नातः परं गन्तुं साम्प्रतमिति । वणिज ऊचुः । न शक्यते विलम्बयितुमपि वहनं कुत एव निवर्तयितुमतिशीघ्र-वाहित्वाद्वहनस्य प्रतिकूलत्वाच्च मारुतस्येति ।

अथ व्यतीत्य तमपि समुद्रं सुवर्णप्रभानुरञ्जितप्रचलोर्मिमालमग्निज्वालाकपिलसलिलमपरं समुद्रमालोक्य कुतूहलिनस्ते वणिजः सुपारगं पप्रच्छुः कोऽयं महार्णव इति । सुपारग उवाच । अयमग्निमालीति विख्यातः समुद्रो विराजते । यद्यतो निवर्तेमहि तर्ह्यतीव क्षेमकरं भवेदस्माकमिति । एवं स महात्मा नाममात्रमकथयन्न तु तस्य सरित्पतेस्तोयवैवर्ण्यकारणं दीर्घदर्शित्वात् । अथ ते सांयात्रिकास्तमपि समुद्रमतीत्य पुष्परागेन्द्रनीलप्रभोद्द्योतितसलिलं परिपक्कुशवननिकाशवर्णं समुद्रमालोक्य कुतूहलात्सुपारगं पप्रच्छुः कतमोऽयं सलिलनिधिरिति । सुपारग उवाच । भोः सार्थवाहा निवर्तनं प्रति यत्नः क्रियताम् । न खल्वतः परं गन्तुं युक्तम् । कुशमाली समुद्रोऽयमत्यङ्कुश इव द्विपो नो हरतीति । अथ ते वणिजः परेणापि यत्नेन निवर्तयितुमशक्नुवन्तस्तमपि समुद्रमतीत्य वैदूर्यप्रभाव्यतिकरहरितसलिलमपरं समुद्रमालोक्य सुपारगमपृच्छन् । कोऽयं वारिधिर्मरकतहरितप्रभैर्जलैर्नवां शाद्वलश्रियं वहतीति । अथ स महात्मा तेन वणिग्जनस्य व्यसनोपनिपातेन दह्यमानहृदयो

दीर्घमुष्णं चाभिनिःश्वस्य शनैरुवाच । अतिदूरमागता वयम्, अतो निवर्तितुं दुःखम् । नलमाल्येष सागरो लोकस्य पर्यन्त इवेति । तच्छ्रुत्वा ते सार्थवाहा विषादोपरुध्यमानमनसो विस्रस्यमानगात्रोत्साहा निश्वसितमात्रपरायणास्तत्रैव निषेदुः । व्यतीत्य च तमपि समुद्रं सायाह्नसमये विलम्बमानरश्मिमण्डले तोयनिधिमिव प्रवेष्टुकामे दिवसकरे समुद्वर्तमानस्येव सलिलनिधेरशनीनामिव च सम्पततां वेणुवनानामिव चाग्निपरिगतानां विस्फुटतां तुमुलमतिभीषणं श्रुतिहृदयविदारिणं समुद्रध्वानिमश्शृण्वन् । श्रुत्वा च संत्रासवशगाः सहसैवोत्थाय समन्ततो विलोकयन्तो ददृशुः श्वभ्र इव महति तमुदकौघं निपतन्तं दृष्ट्वा च सुपारगमुपेत्य परमभयविषादविह्वला ऊचुः । अर्णवस्य समग्रं जलं भीमे श्वभ्र इव निपतति तत्कोयमुदधिरतः परं च किं कर्तव्यमिति । अथ स महात्मा ससंभ्रमं कष्टं कष्टमित्युक्त्वा समुद्रमालोकयन्नुवाच । तदेतद्वडवामुखं यत्प्राप्य न निवर्तन्ते जना इति । तदुपश्रुत्य ते वणिजो वडवामुखमुपेता वयमिति त्यक्तजीविताशा मरणभयविक्लवीभूतमनसः सस्वरं रुरुदुः । केचिद्देवेन्द्रं भक्तिप्रवणेन चेतसा प्रणेमुः केचिदादित्यानपरे रुद्रानन्ये च वसून् । केचित्सुपारगमुपेत्योचुः । आर्ताननाथाञ्शरणागतान्नस्त्रातुमावर्जय चेतः । अयं तोयनिधिर्वडवामुखेनास्मान्ग्रासीकर्तुमिच्छति । सलिलौघमध्ये विपद्यमानानस्मान्नोपेक्षितुमर्हति भवान् । महासमुद्रस्तवाज्ञां नात्येति तस्मादयमस्याप्रशमो वार्यतामिति ।

अथ स महात्मा महत्या करुणया पीड्यमानहृदयस्तान्वणिजो व्यवस्थापयन्नुवाच । अत्रापि नः कश्चित्प्रतीकारविधिः प्रतिभाति । तत्तावत्प्रयोक्ष्ये । यतो मुहूर्तं धीरास्तावद्भवन्तु भवन्त इति । अथ

वणिजोऽस्त्यत्रापि किल प्रतीकारविधिरित्याशया समुपस्तम्भितधैर्या अवहितमनसस्तूष्णीं बभूवुः। सुपारगो बोधिसत्त्व एकांसमुत्तरासङ्गं कृत्वा दक्षिणेन जानुमण्डलेनाधिष्ठाय नावं समावर्जितसर्वभावः प्रणम्य तथागतेभ्यस्तान्सांयात्रिकानुवाच। श्रृण्वन्त्वत्रभवन्तः सांयात्रिकाः सलिलनिधिव्योमाश्रयाश्च देवविशेषाः। यत आत्मानं स्मरामि यतो विज्ञतां प्राप्तोऽस्मि ततो यदि कदापि प्राणिनं हिंसितुं नाभिजानामि तदाऽनेन सत्यवाक्येन मम पुण्यबलेन च वडवामुखमप्राप्य नौः क्षेमेण विनिवर्ततामिति।

अथ तस्य महात्मनः सत्याधिष्ठानबलात्पुण्यतेजसा सलिलजवेन सह स मारुतो व्यावर्तमानस्तां नावं निवर्तयामास। निवृत्तां नावमभिसमीक्ष्य ते सार्थवाहाः परमविस्मयप्रहर्षनिर्भरमानसा निवृत्ता नौरिति प्रणामसभाजनपुरःसरं सुपारगाय न्यवेदयन्त। अथ सुपारगस्तानुवाच। स्थिरीभवन्तु भवन्तः। शीघ्रमारोप्यन्तां शीतानीति। एवं तेनादिष्टाः प्रमोदादुद्भूतबलोत्साहास्ते तथा चक्रुः। निवृत्तायां तस्यामनुकूलसलिलमारुतायां विमानलीलया स्वेच्छयैव चाभिप्रयातायां नावि प्रवितन्यमानतमोवितानास्वालक्षितनक्षत्रभूषणासु दिक्षु सुपारगस्तानुवाच। भोः सार्थवाहा नलमालिप्रभृतिभ्यः समुद्रेभ्यो वालुकाः पाषाणाश्च वहनमारोप्यन्तां यावत्सहते। एवमिदं यानपात्रं निर्घातभराक्रान्तं न च पार्श्वानि दास्यति मङ्गलसंमताश्चैते वालुकापाषाणा नियतं वो लाभसिद्धये भविष्यन्तीति। अथ ते सांयात्रिकाः सुपारगप्रेमबहुमानावर्जितमतिभिर्देवताभिरनुप्रदर्शितेभ्यः स्थलेभ्य आदाय वालुकापाषाणबुद्ध्या वैदूर्यादीनि रत्नानि वहनमारोपयामासुः। तेनैव चैकरात्रेण सा नौर्भरुकच्छमुपजगाम। प्रभाते ते

रजतेन्द्रनीलवैदूर्यहेमप्रतिपूर्णनौकाः स्वदेशतीरान्तमुपागतास्तं सुपारगं महत्या प्रीत्याऽऽनर्चुः ॥

Játakamálá.

---

## XI.

## STORY OF JI'MU'TAVA'HANA.

### Part I.

आसीदखिलविद्याधरचक्रवर्ती जीमूतकेतुर्नाम । स वार्द्धके पलितमौलिमात्मानं दृष्ट्वा पुत्रे जीमूतवाहने राज्यभारमारोप्यारण्यनिवासमङ्गीचकार । जीमूतवाहनस्त्वनिच्छन्नपि पितुरनुरोधाद्राज्यधुरामुवाह । तस्य चात्यन्तसाहसिको मतङ्गो नाम प्रतिपक्ष आसीत् । जीमूतवाहन एकदा पित्राऽऽज्ञापितः । यथा वत्स जीमूतवाहन बहुदिवसपरिभोगदूरीकृतसमित्कुशकुसुममुपभुक्तफलमूलकन्दनीवारप्रायमिदं स्थानं वर्तते । तदितो मलयपर्वतं गत्वा किञ्चित्तस्मिन्निवासयोग्यमाश्रमपदं निरूपयेति । एवमादिष्टो जीमूतवाहनः प्रियवयस्येन विदूषकेण सह मलयपर्वतं प्राप्तः । वयस्य प्रसीदेदानीमपि तावद्गुरुचरणशुश्रूषणनिर्बन्धान्निवृत्त्येच्छापरिभोगरमणीयं राज्यसुखमनुभवेति विदूषकेण प्रेर्यमाणो जीमूतवाहनस्तं बभाषे । वयस्य न सम्यगभिहितं भवता । यथा पितुः पुरस्तिष्ठन्नरो भाति तथा किं सिंहासने भाति । पितुश्चरणौ संवाहयतो यत्सुखं तत्किं राजके भवति । राज्यं खल्वायासकरं किं तत्रास्ति कश्चिद्गुण इति । विदूषक उवाच । वयस्य न खलु राज्यसुखमेवोद्दिश्यैवं भणामि । अन्यदपि ते करणीयमस्तीति । जीमूतवाहनः प्रत्युवाच । मया प्रकृतयो

न्याय्ये वर्त्मनि योजिताः। बन्धुजना आत्मसमतां नीता राज्ये च रक्षा कृता। किमतः परं कर्तव्यं तत्कथयेति। विदूषकेणोक्तम्। त्वत्प्रतिपक्षे मतङ्गहतके स्थिते न तव राज्यं त्वया विना सुस्थिरमिति मे मतिरिति। जीमूतवाहन उवाच। ननु शरीरात्प्रभृति सर्वमेव मया परार्थं परिपाल्यते। यत्तु राज्यं मतङ्गाय मया स्वयं न दीयते तत्तातानुरोधात्। तत्तिष्ठतु तावत्। किमनया राज्यचिन्तया। वरं तताज्ञैवानुष्ठितेति। एवं परस्परं विवदमानौ यावन्मलयपर्वतमारुह्याश्रमपदं न्यरूपयेतां तावज्जीमूतवाहनस्य दक्षिणमक्षि पस्पन्दे। मनोरथाय न कस्मैचिदप्याशंसे किं मे चक्षुः स्पन्दत इति जीमूतवाहनेनोक्ते विदूषकेणोक्तम्। आसन्नं प्रियं निवेदयतीति। किञ्चिदन्तरं गत्वा घनस्निग्धपादपविशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गममनुद्विग्नसुखनिषण्णश्वापदगणं तपोवनं तयोर्दृष्टिपथमागतम्। तत्तपोवनं पितुर्निवासाय योग्यमिति जीमूतवाहनो मेने। तस्मिंस्तपोवने गौर्या आयतने सिद्धराजपुत्री मलयवती सह चेट्या गौरीमाराधयितुमागता तत्र च वीणां वादयन्ती काकलीं गायन्ती जीमूतवाहनेन दृष्टा। तां दृष्ट्वा जीमूतवाहन उवाच। कदाचिद्द्रष्टुमनर्होऽयं स्त्रीजनो भवति। आवाभ्यामपि देवता वन्दनीया। तदावां तमालगुल्मेकनान्तरितौ देवतादर्शनावसरं प्रतिपालयाव इति। नायिकाऽगायत्। उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि। अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन॥ इति। चेटी बभाषे। भर्तृदारिके चिरं खलु त्वया वादितम्। परिश्रान्तास्तेऽङ्गुलयः। ननु भणामि किमेतस्या देव्या निष्करुणायाः पुरतो वादितेन या कालमेतावन्तं कन्यकाजनदुष्करैर्नियमोपासनैराराधयन्त्या अद्यापि न ते

प्रसादं दर्शयतीति । एवमुक्त्वा यदा चेटी वीणामाक्षिपत्तदा मलयवती सरोषमुवाच । मा भगवतीं गौरीमधिक्षिप । ननु कृत एवाद्य मयि भगवत्या प्रसादः । अद्य स्वप्ने वीणां वादयन्ती देव्या भणिता । वत्से मलयवति परितुष्टाऽस्मि तवैतया बालजनदुर्लभया मयि भक्त्या । तद्विद्याधरचक्रवर्ती तव पाणिग्रहणमचिरेणैव करिष्यतीति । मलयवतीं कन्यकां विज्ञाय तस्या दर्शनं निर्दोषममन्यत जीमूतवाहनः । किं तु बालभावसुलभसाध्वसात्सा कदाचित्सहसैव गच्छेदिति कृत्वा तमालजालान्तरेणैव तस्याश्चेट्या सहालापं श्रुतवान् । मलयवत्या स्वप्ने कथितेऽवसर एवायमात्मानं प्रकाशयितुमिति मत्वा विदूषकोऽनिच्छन्तमपि जीमूतवाहनं बलादाकृष्य मलयवत्या अन्तिकं प्रापयत् । तस्यानन्यसदृशीमाकृतिं दृष्ट्वा भगवत्या गौर्या निर्दिष्टं विद्याधरचक्रवर्तिनं तं चेटी मेने । मलयवती चातिसाध्वसात्तस्याग्रे स्थातुमप्यशक्नुवती तं सलज्जं किञ्चित्परावृत्तमुखी ददर्श । यदा तयोरेकतमाऽपि न किञ्चिदभाषत तदा विदूषकेणोक्तम् । भवति किं युष्माकं तपोवन ईदृश आचारो येनातिथिरागतो वाङ्मात्रेणापि न सम्भाव्यत इति । ततश्चेटी प्रियसखीं साध्वसात् प्रतिपत्तिमूढां ज्ञात्वाऽऽसनदानादिना विदूषकं जीमूतवाहनं चापूजयत् । अत्रान्तरे कश्चित्तापसो मलयवतीमेवान्वेष्टुकामस्तत्र प्राप्तः । तेन सह गतायां मलयवत्यां जीमूतवाहनोऽपि सह विदूषकेण कन्दमूलफलैराहारं निर्वर्तयितुं निष्क्रान्तः ।

यस्मिन्दिने मलयवती जीमूतवाहनं ददर्श तस्मादारभ्य तस्मिन्दृढबद्धभावा सन्तापमन्वभवत् । चन्दनलतागृहे चन्द्रशिलातलमध्यासीना चन्दनपल्लवरसेन वक्षसि सिच्यमाना कदलीदलेन च वीज्य-

मानाऽपि सन्तापविश्रमं नालभत । जीमूतवाहनोऽपि मलयवतीं दृष्ट्वा पञ्चबाणशरव्यतां गतः स्वभावधीरोऽपि । यस्मिन्मलयवती निषण्णा तदेव चन्दनलतागृहं चञ्चलं हृदयं विनोदयितुमाजगाम जीमूतवाहनो विदूषकेण सह । जीमूतवाहनो विदूषकमुवाच । अद्य खलु स्वप्ने सैव प्रियतमाऽत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा । तदिच्छामि स्वप्नानुभूतदयितासमागमरम्येऽस्मिंश्चन्दनलतागृहे दिवसंशेषमतिवाहयितुमिति । आगच्छन्तौ तौ दृष्ट्वा मलयवती रक्ताशोकपादपेनान्तरितविग्रहा तयोरालापं सावधानं श्रुतवती । शशिमणिशिलां दृष्ट्वा जीमूतवाहनो वयस्यमुवाच । सखे, सैवेयं शशिमणिशिला यस्यां वामहस्तोपहितपाण्डुवदना मया रुदती प्रिया दृष्टेति । ततः शिलायामुपविष्ट आत्मानं विनोदयितुं विदूषकोपनीतैर्वर्णकैर्मलयवत्याश्चित्रमालिखत् । तयोरालापं श्रुत्वा जीमूतवाहनमन्यनारीसक्तहृदयं भावयन्ती परं विषादमगच्छन्मलयवती जीवितनिरपेक्षा चाभवत् । अत्रान्तरे मलयवत्या भ्राता मित्रावसुर्नाम पितुः सन्देशं हरन् जीमूतवाहनं चन्दनलतागृहगतं ज्ञात्वा तत्र प्राप्तः । जीमूतवाहनेनोक्तम् । मित्रावसो, अपि कुशली सिद्धराजो विश्वावसुरिति । मित्रावसुरुवाच कुशली । तातसन्देशेनास्मि भवत्सकाशमागत इति । किमाह तत्रभवानिति जीमूतवाहनेनोक्ते मित्रावसुर्जगाद । इदमाह तातः । अस्ति मे मलयवती नाम कन्यका जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य । सा मया तुभ्यं प्रतिपाद्यते प्रतिग्रहेणानुग्राह्या वयमिति । प्रथमं गौरीमन्दिरे दृष्टा स्त्री मलयवत्येवेत्यजानञ्जीमूतवाहन उवाच । क इह नेच्छेद्भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम् ।

किं तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम् । ततो नाहमेनां प्रतिग्रहीतुमुत्सह इति । एतच्छ्रुत्वा मलयवती मूर्च्छामवाप । विदूषकेण मित्रावसुरभिहितः । भोः पराधीनः खल्वेषः । अस्य गुरुजनमभ्यर्थयस्वेति । मित्रावसुरपि विदूषकस्य वचो मानयित्वा तत्रैव गौर्याश्रमे निवसन्तं जीमूतवाहनस्य पितरं द्रष्टुं गतः । मलयवती जीमूतवाहनवचनादात्मानं दुर्भाग्यं मन्यमाना हतजीवितेन प्रयोजनमपश्यन्त्यशोकपादपेऽतिमुक्तलतयात्मानमुद्बध्य व्यापादयितुमैच्छत् । सखि प्रेक्षस्व मित्रावसुर्दूरे गतो वा न वा । पश्चादहमपि गमिष्यामीति सव्याजं सखीमुक्तवती । सखी तस्या नैराश्यात्किमप्यनिष्टमाशङ्कमाना कतिचित्पदानि गत्वाऽऽत्मानं प्रच्छाद्य तच्चेष्टितं निरूपयितुं तत्रैव स्थिता । भगवति गौरि यद्यपि त्वयाऽस्मिञ्जन्मनि न कृतो मय्यनुग्रहस्तथापि जन्मान्तरे यथा नेदृशी दुःखभागिनी भविष्यामि तथा कुर्विति व्याहृत्य यावन्मलयवती कण्ठे पाशमार्पयत्, तावत्तस्याश्चेटी परित्रायतामार्यः, एषा भर्तृदारिकोद्बध्यात्मानं व्यापादयतीति तारं चक्रन्द । तस्याः क्रन्दितमाकर्ण्य जीमूतवाहनः सहसैवोपसृत्य मलयवतीं पाणौ गृहीत्वा न खलु न खलु मुग्धे साहसं कार्यमीदृगित्युक्त्वा लतापाशमाक्षिपत् । मरणव्यवसायस्य कारणं पृष्टा चेटी साकूतं विदूषकं बभाषे । तव प्रियवयस्येन कापि हृदयवल्लभा शिलातल आलिखिता । तस्याः पक्षपातिनैतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतिगृहीतेति जातनिर्वेदयाऽनयैवं व्यवसितमिति । विदूषक उवाच । नात्रापराध्यति मे प्रियवयस्यः । एषैव खलु तेनालिखिता । यदि मां न प्रत्येषि तर्हि स्वयमेव गत्वा शिलातलं प्रेक्षस्वेति । ततः सर्वे चन्दनलतागृहं प्रविश्यापनीतकदलीपत्रं शिलातलं

यावत्प्रेक्षन्ते स्म तावत्तत्र मलयवत्येवालिखिता दृष्टा। आत्मानं चित्रगतं दृष्ट्वा मलयवती लज्जिताऽभूत्। ततो विदूषक उवाच। वयस्य निर्वृत्त इदानीं ते गान्धर्वो विवाहः। तन्मुञ्च तावन्मलयवत्या अग्रहस्तमिति। तस्मिन्नेव क्षणे काचिच्चेटी त्वरितमागत्योवाच। भर्तृदारिके दिष्ट्या वर्धसे। प्रतिगृहीता खलु त्वं जीमूतवाहनस्य गुरुभिः। आज्ञप्ता चास्मि युवराजेन मित्रावसुना। यथाद्यैव मलयवत्या विवाहः। लघु तां गृहीत्वागच्छेति। तदेहि गच्छाव इति। ततो मलयवती प्रियं सलज्जमावर्तितकन्धरं पश्यन्ती परिजनेन सह निष्क्रान्ता। जीमूतवाहनोऽपि समानरूपानुरागकुलवयसां केषांचिदेव पुण्यवतां समागमो भवतीत्युक्त्वा स्नानभूमिं जगाम।

मलयवत्या जीमूतवाहनेन सह विवाहमङ्गले वृत्ते सिद्धविद्याधरकुलयोर्महानुत्सव आसीत्। मलयवत्या सह जीमूतवाहनो गृहीतवरनेपथ्यः कुसुमाकरोद्यानं गत्वा सविशेषं सज्जीकृतां तमालवीथिकां प्राप्तः। यावत्तत्र चाटूक्तैर्नायिकामनुनयंस्तिष्ठति स्म तावन्मित्रावसुस्तव राज्यं मतङ्गहतकेनाक्रान्तमिति निवेदयितुमाजगाम मतङ्गस्योच्छित्तये मह्यमाज्ञां दातुमर्हति कुमार इत्यब्रवीच्च। जीमूतवाहन उवाच। मित्रावसो, किं न सम्भाव्यते बाहुशालिनि त्वयि। किं तु योऽहमयाचितोऽपि स्वशरीरमपि परार्थे दद्यां सोऽहं कथं राज्यस्य कृते प्राणिवधक्रौर्यमनुमन्ये। अपि च कामादीन्विहाय मम शत्रुबुद्धिरेव नास्त्यन्यत्र। तस्माद्यदि त्वं मम प्रियं कर्तुमीहसे तदनुकम्प्यतामसौ वराको राज्यकृते क्लेशवशं गतो मतङ्ग इति। तस्य वचो मित्रावसो रुचये न बभूव। स सामर्षमुवाच। कथं नाम नानुकम्पनीय ईदृशोऽस्माकमुपकारी कृतज्ञश्च मतङ्ग इति। मित्रावसुं कोपाक्षिप्त-

चेतसमनिवार्यसंरम्भं दृष्ट्वा जीमूतवाहनस्तमनुनेतुमुवाच । अभ्यन्तरमेव प्रविशावः । तत्रैव तावत्त्वां बोधयिष्यामीति ॥

Nâgânanda.

---

## XII.

## STORY OF JI'MU'TAVA'HANA.

### Part II.

एकदा जीमूतवाहनो मित्रावसुना सह समुद्रवेलां द्रष्टुं गतस्तमुवाच । शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः, शीतं निर्झरवारि पानं कन्दा अशनं मृगाः सहाया इत्येवमप्रार्थितलभ्यसर्वविभवे वनेऽयमेवैको दोषो यद्दुष्प्रापार्थिजने तस्मिन् परार्थघटनावन्ध्यैः स्थीयत इति । ततो यावज्जलप्रसरणमार्गादपक्रम्य गिरिसानुसमीपमार्गेण पर्यक्रामत्तावज्जीमूतवाहनो नागानामस्थिसङ्घातान् शिखराकारानपश्यत् । तानन्तरेण पृष्टो मित्रावसुरुवाच । इह किल वैनतेयः स्वपक्षपवनापास्तसमस्तसागरतलपूरं रसातलादुद्धृत्य प्रतिदिनमेकैकं नागमाहारीकरोति । ततः सकलनागलोकविनाशशङ्किना नागराजेन वासुकिना गरुत्मानभिहितः । गरुत्मन्, त्वदभिपातसन्त्रासात्सहस्रशः स्रवन्ति भुजङ्गमाङ्गनानां गर्भाः । शिशवश्च पञ्चत्वमुपयान्ति । एवं च सन्ततिविच्छेदोऽस्माकं भवतश्च स्वार्थहानिः । तस्मादेकैकं नागमनुदिनं प्रेषयामीति । एतच्च पक्षिराजेन प्रतिपन्नम् । यानहीन् विहगराजो भक्षयति तेषामस्थ्नां सञ्चयोऽयं गिरिशिखराभो दृश्यत इति । मित्रावसोर्वचः श्रुत्वा जातानुकम्पो जीमूतवाहनो यावदपि शक्नुयामहं स्वशरीरसमर्पणेनैकस्यापि नागस्य प्राण-

परिरक्षां कर्तुमिति मनस्यकरोत्तावत्प्रतीहारो मित्रावसुमुपेत्य तस्य कर्णे तातसन्देशमकथयत् । ततो मित्रावसुस्तातो मामाह्वयति कुमारेणापि बहुप्रत्यवायेऽस्मिन्प्रदेशे कुतूहलिना न स्थातव्यमित्युक्त्वा प्रतीहारेण सह निष्क्रान्तः । जीमूतवाहनोऽपि गिरिशिखरादवतीर्य यावत्समुद्रतटमवलोकयति स्म तावत्, हा पुत्रक शङ्खचूड कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्य इति कस्याश्चिद्योषित आर्तं प्रलापं श्रुतवान् । तदनुसारेण गत्वा वस्त्रयुगलहस्तेन किङ्करेण रुदत्या च वृद्धयानुगम्यमानं शङ्खचूडं नाम नागमपश्यत् । किङ्करेणोक्तम् । नागलोकस्वामी वासुकिः समाज्ञापयति । इदं रक्तांशुकयुगलं परिधाय वध्यशिलामारोह । येन त्वां रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाहारं करिष्यतीति । तद्गृहाणैतद्वासोयुगमिति । लतान्तरितविग्रहो जीमूतवाहनः किङ्करेण कथितं नागराजसन्देशं निशम्यातीव दुःखितोऽभूत् । शङ्खचूडो दुःखपरवशां मातरं बभाषे । अम्ब, यैरत्यन्तदयापरैरर्थिनां प्रार्थना वन्ध्या न कृता यैश्च परार्थकरणे कारुण्यपरिग्रहात्स्वार्थो नैव गणितस्ते परदुःखदुःखितधियः साधवोऽस्तं गताः । अधुना बाष्पवेगं संहर कस्याग्रतो रुद्यते । समाश्वसिहीति । दुःखावेगान्मूर्च्छां गता वृद्धा कथमपि संज्ञां लब्ध्वाऽरोदीत् । हा पुत्रक नागलोकपरिरक्षकेण वासुकिना परित्यक्तस्य ते कोऽपरः परित्राणं करिष्यतीति । तत्क्षण एव जीमूतवाहनो नन्वहमिति ब्रुवन्नुपासर्पत् । तं गरुडं मन्यमाना स्वोत्तरीयेण पुत्रमाच्छाद्य मां व्यापादयाहं तवाहारनिमित्तं परिकल्पितेति स्नेहादब्रवीत् । ततः शङ्खचूडस्तस्यै भूतार्थमकथयत् । जीमूतवाहनो वृद्धामुवाच । अम्ब, एतद्वासोयुगं मह्यमर्पय । तव पुत्रस्य जीवितं

रक्षितुमहं स्वदेहं गरुडाय ददामीति । वृद्धा कर्णौ पिधायोवाच । शान्तं पापं प्रतिहतममङ्गलम् । जात, त्वं शङ्खचूडसदृश एव पुत्रकः । अथवा शङ्खचूडादधिकः । य एवं बन्धुजनपरित्यक्तं मे पुत्रकं स्वशरीरदानेन रक्षितुमिच्छसीति । शङ्खचूडो जीमूतवाहनेन पुनः पुनरभ्यर्थ्यमानोऽपि तदध्यवसायं नानुमेने । ततः शङ्खचूडो मातरं प्रणम्य भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकर्तुं जगाम । वृद्धाऽपि तमनुससार । तस्मिन्नेव क्षणे मित्रावसुजनन्या जामातुः कृते प्रेषितं रक्तांशुकयुगलं कञ्चुकिनोपनीतम् । तद्दृष्ट्वा जीमूतवाहन आत्मगतं सहर्षमाह । दिष्ट्या सिद्धमभिलषितमनेनातर्कितोपनतेन रक्तांशुकयुगलेनेति । गते कञ्चुकिनि जीमूतवाहनो रक्तं वासोयुगं परिधाय यावदसौ शङ्खचूडो नागच्छति तावत्त्वरिततरमिमां वध्यशिलामारोहामीत्युक्त्वाऽऽत्मानमाच्छाद्य महत्या प्रीत्या शिलामारुरोह । तस्मिन्नेव क्षणे पक्षानिलवेगचालितमलयाचलशिलाचयः पक्षिराजस्तत्र प्राप्तः । रक्ताम्बरप्रावृतं जीमूतवाहनं नागं मत्वा तं गृहीत्वाऽऽहारीकर्तुं मलयशिखरं प्रस्थितः । तस्मिन्नेव क्षणेऽम्बरतलात्पुष्पवृष्टिः पपात दुन्दुभयश्च नेदुः ।

चिरयति जीमूतवाहने तस्य वृत्तान्तं ज्ञातुं विश्वावसुना जामातुः पित्रे जीमूतकेतवे प्रतीहारः प्रहितः । जीमूतकेतुरुटजाङ्गने सहधर्मचारिण्या वध्वा मलयवत्या च पर्युपास्यमानोऽतिष्ठत् । उवाच च । मया यौवनसुखान्यनुभूतानि सर्वासु दिक्षु यशोऽवकीर्णं तपोऽपि सञ्चितं श्लाघ्यः सुतः प्राप्तः, इयं च सदृशान्वयसम्भवा स्नुषा लब्धा । अधुना कृतार्थतया मृत्युरेव चिन्त्य इति । तत्रान्तरे जीमूतवाहनस्य वार्तामन्वेष्टुं प्रेषितोऽस्मि महाराजेन विश्वावसुना युष्मदन्तिकम्,

तदाज्ञापयतु महाराजः किमहं स्वामिने निवेदयामीति प्रणामपुरः-सरमुवाच प्रतीहारः । जीमूतवाहनस्यासन्निहिततया विषादं गतो जीमूतकेतुर्वामाक्षिस्पन्दनेन पर्याकुलहृदयोऽतिस्नेहात्किमपि पापमा-शङ्कमानो यावदासीत्तावन्नभस्तो लग्नसरसमांसश्चूडामणिस्तस्य चरण-योरेव पपात । तच्चूडारत्नं मम पुत्रकस्यैवेति वदन्तीं जीमूतवाहनस्य जननीं प्रतीहारोऽसान्त्वयत् । अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागा-धिपानामनेके नखमुखोत्खाता निपतन्त्येते शिरोमणय इति । प्रती-हारश्च श्वशुरसदनमागतो जीमूतवाहनो न वेति ज्ञातुं जनन्या विसृष्टः ।

अत्रान्तरे शङ्खचूडोऽर्णवतटे गोकर्णं प्रणम्य यावद्भुजङ्गमवध्य-भूमिं न्यवर्तत तावज्जीमूतवाहनमादाय गगनमुत्पतन्तं गरुत्मन्तं ददर्श । परोपकाराय तृणीकृतदेहं जीमूतवाहनमनुशोचन् शङ्खचूडो रुधिरधारामनुगच्छन्यत्र जीमूतकेतुः स्थितस्तमेवोद्देशमाजगाम । हा त्रिभुवनैकचूडामणे क्व मया द्रष्टव्योऽसि हा मुषितोऽस्मीति तारं क्रन्दन्तं शङ्खचूडं दृष्ट्वा जीमूतकेतुस्तमुवाच वत्स किं तव चूडाम-णिरपहृत इति । शङ्खचूडेनोक्तम् । न ममैव त्रिभुवनस्यापि चूडा-मणिरपहृतः । शङ्खचूडो नाम नागः खल्वहम् । वैनतेयस्याहारार्थं वासुकिना प्रेषितः । करुणाविष्टचेतसा केनापि विद्याधरेणात्मानं गरु-त्मते दत्त्वाऽनिच्छतोऽपि मम प्राणाः संरक्षिता इति । तच्छ्रुत्वा जीमूतवाहनात्कोन्य एवं परहितव्यसनीति मत्वा जीमूतकेतुर्हा हतो-ऽस्मि मन्दभाग्य इति रुरोद । सर्वे च मोहं गताः । प्राणप्रदस्य जीमूतवाहनस्य सुसदृशं प्रत्युपकृतं मयेत्यात्मानमुपालभ्य शङ्खचूडो जीमूतवाहनस्य पितरौ समाश्वासितवान् । मलयवत्यपि श्वश्र्वा समा-

श्वासिता संज्ञामलभत । ततः श्वशुरपादयोर्निपत्य कृताञ्जलिर्मलय-वती सकरुणमुवाच । तात देहि मे आर्यपुत्रस्याङ्गाभरणचिह्नं चूडा-रत्नं येनैतद् हृदये कृत्वा ज्वलनप्रवेशेनापनयामि हृदयस्य सन्ताप-मिति । ततो जीमूतकेतुरुवाच । पतिव्रते किमेवमाकुलासि । ननु सर्वेषामेवास्माकमयं निश्चयः । किं त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः । अतोऽग्निहोत्रशरणादग्निमादायात्मानमुद्दीपयाम इति । तथा कृतनिश्चयांस्तान्दृष्ट्वा शङ्खचूडोऽतीव व्यथित उवाच । तात न खल्वनिश्चित्यैव युक्तमीदृशं साहसमनुष्ठातुम् । **विचित्राणि विधे-र्विलसितानि** । कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः । तद्रुधिरधारया वैनतेयमनुसराम इति । जीमूतकेतुः शङ्खचूडस्य वचो-ऽभिनन्दितत्रानुवाच च । साग्नीनामेवास्माकमनुसर्तुं युक्तम् । तदनु-सरतु भवान् । वयमप्यग्निशरणादग्निमादाय त्वरितमेवानुगच्छाम इति । ततो जीमूतकेतुः पत्नीवधूसमेतो निर्जगाम शङ्खचूडश्च गरुड-मनुससार ।

गरुडोऽपि जीमूतवाहनमादाय मलयाद्रिशिखरे स्थितस्तं चञ्च्वा खादितुं प्रचक्रमे । रुधिरे पीयमाने मांसे चोत्कृत्यमानेऽपि जीमूत-वाहनं प्रसन्नवदनं दृष्ट्वा खगेश्वरस्तस्य धैर्यवृत्त्योपजातकुतूहलो भक्षणादुपरतो बभूव । ततो जीमूतवाहनस्तमुवाच । गरुत्मन्, शिरामुखैः स्यन्दत एव रक्तम्, अद्यापि मम देहे मांसमस्ति, तवापि तृप्तिं न लक्षये तत्किमिति भक्षणात्त्वं विरतोऽसीति । तस्य धैर्येण परं विस्मयं प्राप्तो नागान्तकः कस्त्वं महासत्त्व इति श्रोतुमिच्छा-मीति बभाषे । यावज्जीमूतवाहनो गरुडमुवाचैवं क्षुधाकुलो भवान्न श्रवणयोग्यस्तत्कुरुष्व मम मांसशोणितेन प्रथमं तृप्तिमिति तावच्छ-

ङ्खचूडः सहसोपसृत्य गरुडं पर्यवारयत् । तार्क्ष्य नायं नागः । परित्यक्त्वैनं मां भक्षय यतोऽहमेव तवाहारार्थं वासुकिना प्रेषित इति । गरुड उभावपि वध्यचिह्नधारिणौ दृष्ट्वा कः खलु नाग इति नावगच्छामीत्युवाच । ततः शङ्खचूडेन स्वस्तिकलक्ष्म जिह्वे फणाश्च दर्शयित्वा गरुडस्य भ्रान्तिर्दूरीकृता । गरुडः सव्यथं शङ्खचूडं पप्रच्छ कस्तर्ह्यसौ मया व्यापादित इति । शङ्खचूडः प्रत्युवाच । विद्याधरवंशतिलके जीमूतवाहने परमकारुणिकेनापि त्वयाऽज्ञानान्निष्ठुरमाचरितमिति । ततो गरुत्मान्पश्चात्तापस्य परां काष्ठां गतो महत्यंहःपङ्क आत्मानं पतितं मन्यमानस्तस्य महतः पापस्याग्निप्रवेशादृते नान्यत्किञ्चित्प्रायश्चित्तमिति निश्चित्यानलान्वेषणे मतिं बबन्ध । तस्मिन्नेव क्षणे जीमूतकेतुरग्निशरणादग्निमादाय पत्नीवधूसमेतस्तत्रैवाजगाम । जीमूतवाहनाज्ञया शङ्खचूडस्तस्य शरीरमुत्तरीयेणाच्छादितवान् । गरुत्मांस्तस्य नाशक्नोन्मुखमपि दर्शयितुं लज्जया । अतश्च जलधावात्मानं क्षेप्तुमिच्छन्भोः पक्षिराज, अलमनेनाध्यवसायेन यतो नायं प्रतीकारः पापस्येत्युक्त्वा जीमूतवाहनेन निवारितः । जीमूतकेतुः पुत्रं गरुडेन समुपास्यमानं दृष्ट्वा सहर्षो वत्स परिष्वजस्व मामित्युवाच । यावज्जीमूतवाहन उत्थातुमैच्छत्तावत्पतितोत्तरीयो मूर्च्छां गतः । गरुडेन पक्षाभ्यामुपवीज्य संज्ञां लम्भितः । जीमूतवाहनस्य गरुडावकर्तितानि गात्राणि दृष्ट्वा वृद्धा माता गरुडं निरभर्त्सयत । नृशंस कथमिदानीं त्वयैतदारूढनवयौवनशोभं मम पुत्रस्य शरीरमेतदवस्थं कृतमिति । जीमूतवाहनो मातरमुवाच । अम्ब मा मैवम् । किमनेन कृतम् । ननु पूर्वमपीदृशमेव शरीरं परमार्थतः । यतो मेदोऽस्थिमांसमज्जासृक्सङ्घाते त्वक्समावृते सदा बीभत्सदर्शनेऽस्मि-

ऽशरीरे खलु का नाम शोभेति । गरुडेन पापमुक्तिमार्गं पृष्टो जीमूतवाहन एनमुपदिदेश । प्राणाभिघाताद्विरम प्राक्कृतं प्राणिघातमुद्दिश्यानुतापं गच्छ यत्नेन पुण्यं सञ्चिनु सर्वाणि च सत्त्वानि भीतिविरहितानि कुर्विति । गरुडः सर्वप्राणिवधादद्यप्रभृति विरतोऽहमिति प्रतिज्ञातवान् । तस्मिन्नेव क्षणे मर्मच्छेदिनीभिर्वेदनाभिर्बाध्यमानो जीमूतवाहनो मरणावस्थां प्राप्तः । जीमूतवाहनस्तातं मातरं च कथं कथमपि प्रणम्य प्राणांस्तत्याज । तदा हा जीमूतवाहन परित्यज्यास्मान्क यासीति सर्वे तारमरुदन् । वृद्धा सकरुणमुवाच । भगवन्तो लोकपालाः कथममृतेन सिक्त्वा मम पुत्रकं न जीवयथेति । अमृतसङ्कीर्तनात्समुपजातस्मृतिर्गरुड आत्मगतमुवाच । त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनं पूर्वभक्षितानेतानपि प्रत्युज्जीवयाम्यस्थिशेषानुरगपतीन् । यदि प्रार्थितोऽपि न ददात्यसौ तदा देवानाजौ निर्जित्य क्षणममृतमयीं वृष्टिमभ्युत्सृजामीति । ततो गरुडो गतः । जीमूतकेतुः शङ्खचूडं चितां सज्जीकुर्वित्याज्ञापयत् । चितासमारोहणाय सर्वेऽपि सज्जीबभूवुः । मलयवती बद्धाञ्जलिरूर्ध्वं विलोक्योवाच । भगवति गौरि त्वयाज्ञप्तं विद्याधरचक्रवर्ती भर्ता ते भविष्यतीति तत्कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्तेति । ततो जीमूतकेतो न खलु साहसमनुष्ठातव्यमित्युक्त्वा गौरी सहसा प्रादुर्भूय जीमूतवाहनं कमण्डलूदकेनाभिषिषेच । प्रत्युज्जीवितो जीमूतवाहनोऽञ्जलिं बद्ध्वा गौरीमस्तौत् ।

अभिलषिताधिकवरदे प्रणतिपरजनार्तिहारिणि शरण्ये ।
चरणौ नमाम्यहं ते विद्याधरवन्दिते गौरि ॥ इति ।

तदैवानभ्राद्गगनाद्गरुडेनामृतवृष्टिः पातिता तया सम्प्राप्ताखण्डदेहा

विषधरा वक्त्रैः प्रस्थानमार्गैस्तोयनिधिं प्राविशन्। गौरी बभाषे। वत्स जीमूतवाहन न केवलं त्वं जीवितदानमात्रस्यैव योग्यः। अयं पुनरपरस्ते प्रसादः, त्वां स्वयमभिषिच्य विद्याधरचक्रवर्तिनं करोमीति। एवमुक्त्वा जीमूतवाहनाय काञ्चनचक्रं चतुर्दशनो द्विपः श्यामो हरिर्मलयवती चेत्येतानि रत्नानि ददावुवाच च। उच्यतां किं ते भूयः प्रियं करोमीति। जीमूतवाहनः प्राञ्जलिर्बभाषे। पतगपतिभयादयं शङ्खचूडस्त्रातो वैनतेयो विनीततां प्रापितस्तेन ये विषधराः पूर्वं भक्षितास्ते सर्वे जीविता मद्गुरुभिश्चासवो न मुक्ता मया च चक्रवर्तित्वमाप्तं त्वं च साक्षाद्दृष्टा। अतःपरं किमपरं प्रियं प्रार्थ्यसे। तथापीदमस्तु भरतवाक्यम्।

वृष्टिं हृष्टशिखण्डिताण्डवकृते मुञ्चन्तु काले घनाः
कुर्वन्तु प्रतिरूढसन्ततहरिच्छस्योत्तरीयां क्षितिम्।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसै-
र्मोदन्तां सततं च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः॥ इति॥

Nâgânanda.

---

## XIII.

## THE TALE OF KÂDAMBARÎ.

### Part I.

आसीद्वेत्रवतीतटे विदिशा नाम काचित्पुरी मण्डनं भूमण्डलस्य पुरुहूतपुरस्पर्धिविभवा। तस्यां निजभुजवीर्यविजितसकलारातिमण्डल आखण्डल इव श्रीमान्राजा शूद्रकोऽभवत्। तस्यानन्यलभ्यानां सुखानां पारदृश्वनोऽपि यूनोऽपि विषयपराङ्मुखं मनो बभूव।

अथैकदा बाह्याङ्गणस्थानवर्तिनं तमुपसृत्य प्रतीहारी विनयावनम्रा व्यजिज्ञपत् । देव काचिच्चण्डालकन्यकाऽऽश्चर्यावहं शुकमादाय देवदर्शनलालसा तमुपायनीकर्तुं देवपादमूलमागता । श्रुत्वा देवः प्रमाणमिति । क्षणं विमृश्य मन्त्रिणां मुखमालोक्य को दोषः प्रविशत्विति समादिदेश । राज्ञानुज्ञाता सा चण्डालकन्यका सह केनापि हस्तस्थशुकस्वर्णपञ्जरेण चण्डालस्थविरेण नृपाङ्गणं प्रविवेश । तस्यास्तदद्भुतं रूपं विलोक्य नृपतिः परं विस्मयं ययौ । सा च प्रविश्य महीपालमनाकुलेन चक्षुषा वीक्ष्य प्रगल्भवनितेव प्रणनाम । ततः क्षितितलनिहितजानुः प्रणतकन्धरः स्थविरोऽब्रवीत् । अयं वैशम्पायननामा शुकोऽद्भुतं रत्नम् । सकलभुवनतलरत्नानां चोदधिरिवैकभाजनं देवः । इति स्वामिदुहित्राऽयं शुक आदरेणोपाहृतः । विहगं परिगृह्य प्रसादः क्रियतामिति । एवमुक्त्वा राज्ञोऽग्रतो मणिकुट्टिमे पञ्जरं विनिधाय तं प्रणम्य सप्रश्रयमपासरत् स्थविरः । प्रतीहार्या विवृतद्वारसम्पुटात्पञ्जराद्विहङ्गमो निर्ययौ । स दक्षिणं पादमुत्क्षिप्य जयशब्दमुदीर्य च प्रयुक्तवेदमन्त्राशीरिमामार्यामपठत् ।

**स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।**
**चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥**

इति । तामाकर्ण्य विस्मयोत्फुल्ललोचनो महीपालः कुमारपालनामानं मुख्यसचिवमब्रवीत् । ईदृशमाश्चर्यं भवद्भिः कुत्रापि दृष्टं श्रुतं वेति । अमात्य उवाच । देव, **पूर्वसंस्कारोपजनिता एतादृशा अतिशया प्राणिनां भवन्त्येव** । कोऽत्र विस्मय इति । एवमुक्तवति सचिवे तारगम्भीरो मध्याह्नपटहध्वनिरुदभूत् । अस्याश्चण्डालकन्यकायाः सुखायावसथादिकं बहिः प्रकल्प्यतामयं च

विहङ्गमवरोऽभ्यन्तरं प्रवेश्यतामिति प्रतीहारीमादिश्य सेवार्थमागतं राजन्यचक्रं विसृज्य राजा सभामौज्झत् । ततः कृताल्पव्यायामः स्नात्वा देवपूजां विधाय भुक्त्वा च शय्यागृहं ययौ । पर्यङ्के मुहूर्तमात्रं स्थित्वा शुकमन्तःपुरविश्रान्तं कञ्चुकिनाऽऽनाययामास । कच्चिद्भवताऽऽस्वादितोऽभिमताहार इत्युक्त्वा कौतुकाक्षिप्तहृदयः पप्रच्छ । वैशम्पायन, को नु त्वं क्व जातः कुत इदं ते शास्त्रपाटवं केन वा भवतो विप्रजनोचितं नाम कृतं कथं ते चण्डालजनसम्पर्कोऽभूत्कथं वेहागम इत्यात्मनो वृत्तं कार्त्स्न्येन वक्तुमर्हसीति । एवं क्षितिपेन सबहुमानं पृष्टः शुक आत्मवृत्तान्तं वक्तुं प्रचक्रमे ।

देव, भवतः श्रुतिपथमागतैव विन्ध्याटवी यदेकदेशे कण्डूलगण्डेभदलितद्रुमे दण्डकारण्ये ससीतौ रामलक्ष्मणावुषितौ । यत्र चागस्त्यमुनेः पावनमाश्रमपदं वर्तते यस्योपकण्ठे पुण्यसलिलं पम्पाख्यं सरोऽस्ति । तस्य पश्चिमे तीरे जीर्णः शाल्मलिपादप आरोहपरिणाहाभ्यां व्याप्तव्योमदिगन्तरो वर्तते । तस्मिन् कृतकुलायानि विहङ्गमसहस्राणि निवसन्ति । दिवा यत्र कुत्रापि प्राणयात्रां निर्वर्त्य रात्रौ स्वनीडेषु सुखं शेरते । तस्मिन्नेव वृक्षे जायया सह वर्तमानस्य परिणतवयसः पितुरहमेवैकः सूनुरभवम् । तीव्रां प्रसववेदनां सोढुमसमर्था मदीया जननी पञ्चत्वं गता । मत्तातो जायावियोगदग्धोऽपि पुत्रस्य कृते शोकमुत्सृज्य मत्प्राणधारणे सयत्नो बभूव । प्रेम्णाऽऽत्मनः प्राणवृत्तयेऽपि बहिर्गन्तुं न मतिं चक्रे । मां वक्षसि निधाय दिवानिशं नीड एवास्त । अतिक्रामति काले किञ्चिदुद्भिन्नपक्षतौ मयि सम्भ्रान्तमृगपक्षिकुलश्रुतः कलकलस्तस्मिन्नरण्येऽकस्मादेव समुद्भूतः । ततस्तातस्योरसः शिरोधरां किञ्चिदुन्नमय्य कुतूहलवशाच्च-

क्षुर्दिक्षु निक्षिप्तवानहम् । असंख्यातकिरातपरिवारितं शबरसेनान्यं मृगयारसादायान्तपश्यम् । स सेनापतिर्मृगयाजनितश्रमः पम्पासरस्तीरे शाद्वले क्षणं विश्रम्य पीत्वाऽपः बालमृणालिकाः प्राश्य पुलिन्दैः सहाभिमतं देशं जगाम । एको जरत्पुलिन्दस्त्वजातपिशितलाभो विलम्ब्य शाल्मलौ दृष्टिं चिक्षेप । तस्य दुरारोहस्य तरोरारोहणे यत्नं कृत्वा नीडनिवासिनः शुकान्हत्वा भूमावपातयत् । क्रमेण स दुराचारस्तातस्यापि शिरोधरां बभञ्ज विगतजीवितं तातं चाधोऽक्षिपत् । तदा मम चेतसि न शोको नान्यद्वा किञ्चिदासीदेकं सहजातं भयं विहाय । ततोऽहं पितुरुत्सङ्गाद्विनिर्गत्य शीर्णानां पर्णानां राशिं तूर्णमाविशम् । स पापोऽपि शाल्मलेरवरुह्य मूलवर्तिनो गतासून् शुकानादायागच्छत् । अहं विधिवशाज्जीर्णपर्णसमानवर्णत्वात्तेन नालक्षितः । तस्मिन्दूरमतिक्रान्ते मां पिपासा पर्यबाधत । उड्डयनसामर्थ्याभावात्पद्भ्यामेव यथाकथंचित्पम्पातीरं गन्तुमैच्छम् । तमेव पापपुलिन्दं पदे पदे शङ्कमान इतस्ततोऽनभ्यासात्पतन्हा तातेति शोचन्कण्ठान्तर्वर्तिभिः प्राणैरायास्यमानोऽहमतिष्ठम् । तस्मात्सरसो नातिदूरे तपसां निधेर्जाबालेर्नाम मुनेराश्रमोऽस्ति । तस्य सुतो हारीतनामा तस्मिन्सरसि स्नातुमागतो मां तदवस्थं विलोक्य जातदयः केनापि पापेन कुलायाच्छुकः पातित इत्युक्त्वा मां करेऽगृह्णात् कतिचिच्च पयोबिन्दूनपाययत् । कृताह्निकश्च हारीतो मां पितुराश्रममनयत् । तत्र भगवन्तं जाबालिं महात्मभिस्तपोधनैः परिवृतं जराधवलितमूर्धानं तेजसा ज्वलन्तं साक्षादिव पितामहमद्राक्षम् । स त्रिकालदर्शी भगवान्मां क्षणं वीक्ष्य स्मयमान इवाब्रवीत् । स्वस्यैवाविनयस्य फलमनेनानुभूयत इति । तद्वचः समाकर्ण्य सर्वे मुनयः

कुतूहलाविष्टचेतसस्तमब्रुवन् । भगवन्, अखिलं जगत्करतलगतबद्-रसदृशमालोकयतां किं वः परोक्षम् । कोऽयं बभूव जन्मान्तरे किमस्य वा दुश्चरितं तत्सर्वं कथयित्वाऽस्मास्वनुग्रहः कार्य इति । एवमृषिभि-रभ्यर्थितः स भगवानुवाच । महतीयं कथा । भवद्भिः स्वाः क्रिया निर्वर्त्यन्ताम् । पश्चात्कथयिष्यामीति ।

मुनयः स्वाः क्रियाः समाप्य शुश्रूषवो यथास्थानमुपाविशन् । अहमप्यात्मवृत्तान्तश्रवणोत्सुकश्चापलं विहाय स्थिरमना आसम् । अथ भगवान् जाबालिः स्वविष्टरे सुखासीनो वक्तुं प्रचक्रमे । तपोधनाः, इमां कथां दत्तावधानाः शृणुत । अवन्तिषु गुणसम्पदां निधिर्विभूति-निर्जितलङ्कालकामरावती नगर्युज्जयिनी नाम । यस्यां कैलासनिवास-प्रीतिमुज्झता भगवता महाकालेन स्थितिः क्रियते । तस्यां भरतभगी-रथोपमस्तारापीड इति पृथिवीपतिर्बभूव । तस्यामात्यः प्रज्ञाविभववि-हसितदेवगुरुः शुकनासो नाम ब्राह्मण आसीत् । स राजा नाम्नैव निर्भिन्नसकलारातिकुल एकविक्रमाक्रान्तभुवनतलो जहासेव वासुदेवं विक्रमत्रयाक्रान्तभुवनम् । तस्मिन्प्रज्ञाशालिनि मन्त्रिणि राज्यभारं चिक्षेप । यथा यथा लोकोऽस्मिन् पितरीवान्वरज्यत तथा तथा स राजाऽऽत्मानं कृतकृत्यममन्यत । कृतकृत्यस्यैव राज्ञो विषयोपभोगः शोभते, असमाप्तजिगीषस्य तु स उपहासाय कल्पते । सम-ग्राणि सुखान्युपभुञ्जानोऽपि सुतमुखालोकनसमुद्भवमेवैकं सुखं नान्व-भवत् । यथा यथा कालेनास्य नवं वयो व्यतीयाय तथा तथा निर-पत्यतया शोकोऽवर्धत । अन्तःपुरकदम्बके तस्य मुख्या राज्ञी विला-सवती नामासीत् । सा भर्तुरनुज्ञया गौरीमर्चयितुं देवतायतनमग-च्छत् । तत्र च पुराणे वाच्यमानेऽपुत्रस्य कुतो लोकाः शुभा इति

शुश्राव । तच्छ्रुत्वा कामपि वेदनां गता । स्वभवनं निवृत्ता वस्त्रेण मुखमावृत्य भूमावुपविष्टा रुरोद । सखीभिः प्रार्थ्यमानापि नाकरोदाहारं नापि विरराम रोदनात् । परिजनात्तस्या अवस्थां निशम्य राजा तां सान्त्वयन्नाह स्म । प्रिये किमिदमारब्धं त्वया किमकारणं रुद्यत इति । यदा सा किञ्चिन्नोवाच तदा नृपतिः सखीभिः परिगृहीतार्थः कृतः । राजापि ततः शोकपरायणो बभूव । महिषीं सान्त्वयन्राजा सगद्गदं जगाद । देवि, इयमेव चिन्ता मामपि सुचिरं दुनोति । महदपि राज्यं न मे सौख्यमावहति । विफलं मम जीवितम् । न खलु वयमनुग्राह्या देवतानाम् । कुतोऽस्माकमियती भाग्यसम्पद्यत् तवोत्सङ्गं पुत्रपूर्णं द्रक्ष्याम इति । एवं बाष्पाकुललोचने राज्ञि विलपति शुकनासो वार्तां श्रुत्वा सत्वरमाययौ । तस्यापि गृहिणी रोदिति स्मानपत्यतया । किं तु स्वामिदुःखापनयनाय धीरमभ्यधात् । क्व धीरप्रकृतिर्देवः, क्वेयं विक्लवचित्तता । भवादृशां हृदये शोको नैव पदं लभते । आधीयतां धैर्ये धर्मे च धीः । धर्ममूलं हि सर्वम् । विप्रेभ्यो वसु दीयतां देवताः पूज्यन्ताम् । वापीकूपतडागादीनि खन्यन्तामिति । इदं शुकनासवचः श्रुत्वा विगतशोकौ तौ दम्पती स्वाः क्रिया निर्वर्तयामासतुः । शुकनासोक्तं यथावदन्वतिष्ठद्राजा । एकदा राजा स्वप्ने विलासवत्या वदनं प्रविशन्तं निशाकरमद्राक्षीत् । शुकनासश्च स्वगृहिणीं मनोरमां सपुण्डरीकाङ्कां व्यलोकयत् । अन्येद्युरुदिते भानुमण्डले तं स्वप्नं राजा शुकनासाय शशंस । सोऽभिदधे । देव सम्पन्नास्ते मनोरथाः । पूर्णेन्दुसुन्दरं पुत्रमचिरादेव देवी सोष्यत इति । केषुचिद्दिनेष्वतीतेषु विलासवती गर्भमधत्त । दशमे मासि शुभायां वेलायां देवी सुतमसूत । राजा शुकनासेन सहौत्सुक्यात्सूतिकावासं

गत्वा तत्र नयनानन्दकरं कुमारमुदयरागार्द्रं नवमिन्दोर्बिम्बमिव ददर्श। शिशोरेकैकमङ्गं निपुणं निरूप्य भूपालं हस्त आलम्ब्य शुकनास उवाच। अयं शङ्ख इदं चक्रमिदमम्बुजमित्येतानि वालस्य चक्रवर्तित्वसूचकानि लिङ्गानि पश्य। योऽसौ स्वप्ने देवीमुखं विशंस्त्वया चन्द्रमा दृष्टः स एवायमिहोत्पन्न इति मे मतिरिति। अत्रान्तरे मन्त्रिगृहादागत्य द्वाररक्षकः शुकनासगृहे पुत्रजन्मोत्सवमकथयत्। तच्छ्रुत्वा प्रमोदनिर्भरो महीपतिः शुकनासमालिङ्ग्य तस्योत्तरीयं पूर्णपात्रमिति स्वयं जग्राहोवाच च। पश्येदं विधेरानुकूल्यं यत्सुखस्योपरि सुखमपरं विहितमिति। ततोऽनपेक्षितनीचोच्चव्यवहारोऽनवरतवादिततूर्यादिमङ्गलवाद्यो महोत्सवः प्रववृते। जातकर्मादौ कृते विलासवत्यां स्नातायां प्रशस्तेऽहनि महीपतिः स्नात्वा: द्विजोत्तमान्सुवर्णलक्षेण पूजयित्वा परिजने भूषणानि वासांसि च वर्षन् दैवज्ञैरनुज्ञातो वालस्य स्वप्नसदृशं चन्द्रापीड इति नाम निर्ममे। शुकनासोऽपि स्वसुतस्य द्विजजनोचितं वैशम्पायन इति नाम चक्रे। चन्द्रापीडः क्रमेणालक्ष्यदन्तमुकुलाननेनाव्यक्तवर्णैरालापैश्च पित्रोर्मनो जहार। समाप्तप्राये षष्ठे वर्षे राजा चन्द्रापीडस्य कृते नगराद्बहिर्विद्यागृहमकारयत्तत्र च तं विद्याधिगमाय निवेश्य धनुर्वेदविशारदान्दण्डनीत्यादिनिपुणानाचार्यान्पर्यकल्पयत्। शुकनासोऽपि यथाविधि पुत्रमुपनीय राजपुत्रानुगं चक्रे। गुरुकुले स्थितं पुत्रं द्रष्टुं राजा तारापीडः सह देव्या वारंवारमगच्छत्। देव्या विलासवत्या प्रार्थ्यमानोऽपि तं स्वगृहं कदापि नैवानाययत्। पूर्णे षोडशे वर्षे कुशाग्रधी राजपुत्रः सर्वशास्त्रार्थतत्त्वज्ञोऽनेकभाषाकोविदः सकलकलानिपुणो व्यायामसेवनेन च प्राप्तसर्वाङ्गसौष्ठवः प्रलम्बबाहुः पीनांसः पृथुवक्षास्तनूदरः सञ्जातः।

शुकनासस्सुतस्तस्य प्रतिविम्बमिवाभवद्विना महाप्रमाणशरीरम् । राजा पुत्रं कृतविद्यं वुद्ध्वा गुरुवेश्मन आनेतुमुपचक्रमे । वाहिनीपतिं बलाहकनामानं राजपुत्रसहस्रपरिवृतं शुभगुणातिशयितोच्चैःश्रवस्केनेन्द्रायुधनाम्ना वाजिनोपेतं प्राहिणोत् । बलाहको विद्यागृहं गत्वा राजपुत्रं सादरं प्रणम्य राजाज्ञामुक्त्वा तस्मै सनामग्रहणं राजपुत्रान्न्यवेदयत । पर्याणरत्नज्योतिर्भिर्जनितेन्द्रायुधप्रभमिन्द्रायुधं प्रवेश्य बलाहकः प्राह स्म । पारसीकाधिपतिना देवस्योपायनीकृतमिममश्वमारोहेति । तं तुरङ्गमं दृष्ट्वा परं विस्मयमापन्नश्चन्द्रापीडोऽचिन्तयत् । नैष सत्यं तुरङ्गमः । कोऽपि महात्मा शापवशात्तुरङ्गतां प्राप्त इति । बलाहकसमर्पितकुसुमस्रगलङ्कारदुकूलकृतमण्डनश्चन्द्रापीडो गुरूनामन्त्र्य ब्राह्मणैर्दत्ताशीस्तुरगाधिरूढेन वैशम्पायनेन सहेन्द्रायुधमारुह्य विद्यागृहान्निर्जगाम । शनैर्नगरीं च प्रविवेश ।

नृपभवनद्वारं प्राप्य तुरगादवतीर्य हर्षबाष्पार्द्रचक्षुः पितुश्चरणौ ववन्दे । राजा तमालिङ्ग्य शिरस्युपाघ्रायोत्सङ्गे निवेशयितुमैच्छच्चन्द्रापीडस्तु भूमावेवोपाविशत् । ततो राज्ञा विसृष्टो मातरं विलासवतीं सर्वाण्यन्तःपुराणि शुकनासं तत्पत्नीं मनोरमां च प्रणनाम । सर्वत्रावाप्ताशीश्चन्द्रापीडः सर्वोपकरणोपेतं पित्रा तदर्थे पूर्वमेव प्रकल्पितं कुमारभवनं जगाम । ततः स्नातानुलिप्तं कृताहारं सुखस्थितं चन्द्रापीडं मात्रा विसृष्टः कञ्चुकी समागत्याभाषत । कुमार, देवी विलासवती समाज्ञापयति । इयं खलु कन्यका पत्रलेखाभिधाना कुलूतेश्वरदुहिता कुलूतेश्वरे देवेन विजिते बन्दिजनेन सहानीता । सा मया विगतनाथा राजदुहितेति कृत्वा दुहितृनिर्विशेषं संवर्धिता । सेयमुचिता ते ताम्बूलकरङ्कवाहिनीति मत्वा मया

प्रेषिता । न चास्यामितरपरिजनवत्कुमारेण वर्तितव्यम् । सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीयेति । एवमुक्त्वा कञ्चुकी प्रियदर्शनां विनीतां कृताभिजातप्रणामां कन्यामुपाहरत् । सा कन्या चन्द्रापीडदर्शनेनैव समुपजातसेवारसा तं छायेवान्वसरत् । चन्द्रापीडोऽपि शीलाचारविनयादिभिर्गुणैस्तथा तोषितस्तया यथाऽऽत्मह्रदयादव्यतिरिक्तां सर्वविश्रम्भेष्वेनाममन्यत ।

कियत्स्वपि दिनेष्वतीतेषु राजा चन्द्रापीडस्य यौवराज्याभिषेके मतिं चकार । सन्निकृष्टाभिषेकं दर्शनार्थमुपागतं चन्द्रापीडं शुकनास उवाच । तात, विज्ञातशास्त्रस्य विनयाचारशालिनो विदितवेदितव्यस्य स्थिरमतेस्तव नाल्पमप्युपदेष्टव्यमस्ति । **किं तु लोकोत्तरा लक्ष्मीर्नयनाभिरामं वपुर्नवं वयः प्रकृष्टा शक्तिरिति महतीयमनर्थपरम्परा** । एकैकमप्येतेषां सर्वाविनयानां स्थानं किं पुनस्तेषां समवायः । **लक्ष्मीर्नाम परं पुंसां चेतोविकारकारणम्** । हृदयानुप्रवेशिभिर्धूर्तैर्मुखमधुभिरापातरमणीयेषु विषयेषु राजानः प्रवर्त्यन्ते । तस्मात्कुमार तथा प्रयतेथा यथा धूर्तैर्न वञ्चयसे साधुभिर्न निन्द्यसे कामैश्च न प्रबाध्यसे । कामं भवान् प्रकृत्यैव धीरः पित्रा च महता प्रयत्नेन समारोपितसंस्कारः । तथापि भवद्गुणसम्पत्सन्तोष एव मां मुखरीकरोति । अयमेव कालस्तवोपदेशस्य । **विरला हि राज्ञामुपदेष्टारः** । पित्रा निवेशितां राज्यधुरां सम्यगुद्वहेति । ततः पुण्येऽह्नि स्नातं विधिवत्कृतमङ्गलं पुत्रं तारापीडो यौवराज्येऽभ्यषिञ्चत् । अन्यस्मिन्दिने राजा चन्द्रापीडस्य दिग्विजयाय यानमनुमेने । विधिज्ञेन पुरोधसा कृतप्रस्थानहोमो विप्रैः कृतस्वस्त्ययनो यत्नरुद्धास्त्रया मात्रा कृतप्रस्थानमङ्गलः शङ्खदुन्दुभिनिर्घोषमुखरीकृतादिङ्मुखः सूत-

मागधबन्दिभिस्तारं पठद्भिः स्तुतश्चन्द्रापीडः पितरौ शुकनासं च प्रणम्य राजभवनान्निर्जगाम । वलाहकनिवेदितैः सहस्रसङ्ख्यै राजपुत्रैर्वैशम्पायनेन श्वेताश्ववर्तिनाऽश्वतरीस्थितया पत्रलेखया चानुगम्यमान आरूढ इन्द्रायुधं सिप्राकूले प्रकल्पितं चित्रमुच्छ्रिततोरणं निवासमध्यास्त । उन्नतान्नमयन्नानतान्परिपालयन् कांश्चिदवशानुत्खनन्नुत्खातान्प्रतिरोपयन्संरक्षञ् शरणागतान्ब्राह्मणेभ्यो ग्रामान्ददद्वर्षत्रितयमात्रेण समग्रामर्णवावधिं वसुन्धरां बभ्राम । उत्तरस्यां दिशि हेमजटाख्यानां किरातानां निकेतनं सुवर्णपुरं जित्वा कैलासपरिसरायां नितान्तरम्यायां भूमौ दिग्विजयश्रान्तः कियतोऽपि वासरानास्त । एकदा तु मृगयां कुर्वन् किन्नरमिथुनमद्राक्षीत् । अश्वमुखं तन्मिथुनमालोक्यादित्सुः कौतुकेन वाजिनमिन्द्रायुधं प्रेरयामास । अपूर्वपुरुषालोकत्रासात्कन्दरं प्रवेष्टुकामौ तौ महता वेगेनानुससार । तौ किन्नरौ तस्याग्रतः पर्वतशिखरमारूढौ । ततस्तद्ग्रहणाकाङ्क्षामुत्ससर्ज । वल्गां समाकृष्य श्रमस्वेदार्द्रविग्रहं श्वसन्तं तुरङ्गमं दृष्ट्वाऽऽत्मानं चैकाकिनमुपलभ्य मानुषाणामगम्यं तं प्रदेशं निर्वर्णयन्सानुतापमचिन्तयत् । अहो मेऽस्थानेऽभिनिवेशः । मया बालिशेनेव व्यर्थमात्माऽऽयासितः । को वा मेऽर्थः किन्नरमिथुनग्रहणेनाग्रहणेन वा । धावता मया पन्था नैवालक्षितः । पर्णतृणाकीर्णे वने वाजिनः पादमुद्राश्च न स्युः । केवलं दक्षिणामाशामुद्दिश्य यथा तथा गन्तव्यमिति । अतिश्रमेण तृषार्तः पानीयमन्विष्यन्वनमैक्षत । ततश्च वनस्य मध्ये महत्सर आलोकयामास । तदालोकमात्रेण विगतश्रमस्तत्पुलिनं प्राप्य वाजिनोऽवततार । तमपनीतपर्याणं कृत्वा जलं पाययित्वा तरुतले संयम्यासिलूनानि तृणान्यस्याग्रेऽक्षिपत् ।

पश्चात्स्वयं स्नात्वा पानीयं पीत्वा बिसकन्दलीर्भुक्त्वोत्तरीयोपधानः शिलातले निषसाद । ततः सरस उत्तरस्मिंस्तटेऽमानुषं गीतध्वनिं शुश्राव । कुतोऽत्र विजने वने गीतमित्युद्भूतविस्मयश्चन्द्रापीड उत्थाय तामेव दिशमभ्यगात् । किञ्चिदन्तरं गत्वा स्फाटिकं प्रासाद-मैक्षत । तत्र रत्नपीठप्रतिष्ठितं देवमुमाकान्तं दृष्ट्वा प्रणनाम । उमा-पतिमूर्तेर्दक्षिणतो विहितासनां कलस्वनामुत्सङ्गनिहितां वीणां वाद-यन्तीं नवेऽपि वयसि प्राप्तवैराग्याभ्यासवासनां धृतपाशुपतव्रतां काञ्चित्कुन्दगौरीं कन्यकामपश्यत् । तां दृष्ट्वा विस्मयाविष्टचेताश्चन्द्रा-पीडः केयं कन्यका न मे संशीतिरस्या दिव्यतां प्रतीति चिन्तय-न्गीतावसानसमयप्रतीक्षणपरायणः स्तम्भाच्छादितविग्रह आस्त । सा कन्या गीतं समाप्तिं नीत्वा वल्लकीं विनिधाय चन्द्रचूडाय प्रणम्य चन्द्रापीडमभाषत । अतिथे स्वागतं तेऽस्तु सौम्य विश्रम्यतामिति । तदाकर्ण्य चन्द्रापीड आत्मानं बहु मन्यमानस्तां प्रणम्य गच्छन्ती-मन्वगच्छत् । सा कन्यका निजां गुहां प्रविश्य मृगाजिने समुप-विश्य दर्भासनासीनं चन्द्रापीडमागमनकारणादिकं पप्रच्छ । सोऽपि यथावृत्तं सर्वमाचचक्षे । विदितवृत्तान्ता बहिर्गत्वा तरूणामधः क्षणं स्थित्वा स्वयं विशीर्णैः फलैर्भिक्षापात्रमापूर्य चन्द्रापीडं तदुपयोगाय न्ययुङ्क्त । तस्मिन्कृताहारे सापि फलाहारक्रियामाचरत् । तस्याः प्रशममधुराकृतिं दाक्षिण्यं भावशुद्धिं च दृष्ट्वा चन्द्रापीडोऽमन्यत । आत्मोदन्तं नियतमखिलं वक्ष्यति प्रार्थ्यमाना मयेति ।

सुखासीनां तां चन्द्रापीडो माधुर्यविनयोदारया गिरोवाच । भगवति, त्वत्प्रसादकृतेनैव मानुषतासुलभेन प्रागल्भ्येन मम मनः प्रश्नचापले नियुज्यते । तद्यदि न रहस्यं न वातिखेदकरमिव तत-

स्त्वद्वृत्तान्तश्रवणेनात्मानमनुग्राह्यमिच्छामि । कतमो मुनीनां गन्धर्वाणां सिद्धानां वा वंशो भगवत्या विभूषितो जन्मना । किमर्थं वाऽस्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणमिति । एवं तस्मिन्वदति सा दिव्यकन्यका वल्कलच्छन्नवदना रुरोद । तां प्ररुदितां दृष्ट्वा चन्द्रापीडोऽचिन्तयत् । अहो दुर्निवारता व्यसनोपनिपातानां यदीदृशीमपि दिव्याकृतिमात्मसात्कुर्वन्ति । न ह्यल्पीयसा शोककारणेनैवंविधा महानुभावा आकृतयोऽभिभूयन्त इति । सा लोचने प्रक्षाल्य वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैर्व्याजहार । शोकायैव केवलं जातायाः पापाया मम वृत्तान्तेन किं ते श्रुतेन । तथापि यदि कुतूहलं श्रूयताम् । एतत्प्रायेण भवतः श्रुतिपथमागतमेव यदप्सरसो नाम कन्यका देवसद्मनि सन्ति । तासां सोमामृतसमीरणार्कदक्षकन्यादिसम्भवानि चतुर्दश कुलानि । दक्षस्य मुनिररिष्टा चेति द्वे कन्ये बभूवतुः । तत्र चित्ररथो नाम मुनेः पुत्रो गन्धर्वाणामधीश्वरो महायशाश्चित्रसेनादीनां भ्रातॄणामग्रज आसीत् । अरिष्टायास्तु ज्येष्ठः पुत्रो हंसाभिधानो गन्धर्वराजो बभूव । तयोर्गन्धर्वराजयोर्हंसचित्ररथयोर्महत्प्रेम रूढम् । इतश्च नातिदूरे हेमकूट इति ख्यातस्तयोर्निवासो वर्तते । यत्सोमसम्भूतमप्सरसां कुलं तत्र काञ्चनगौरी गौरीति नाम्ना कन्या सम्बभूव । हंसस्तां हंसगामिनीमुपयेमे । तयोरेकैवाहं मन्दभागिनी कन्या समुत्पन्ना । तातोऽनपत्यतया मज्जन्म सुतजन्मवदभिननन्द । इमां मम देहच्छायां वीक्ष्य तातो वर्णानुरूपं महाश्वेतेति मदीयं नाम चकार । साहं तातकुले कलस्वना वीणेव गन्धर्वाणामङ्कादङ्कं सञ्चरन्ती शैशवमपरिचितायासक्लेशमत्यवाहयम् । बाल्यात्परामवस्थां प्राप्ताऽहं कदा-

चिन्मधुमासदिवसेषु स्नातुमच्छोदसरसि सहाम्बया गता । सह सखीभिः कानने विचरन्ती कस्मिंश्चित्प्रदेशेऽन्यगन्धाभिभाविनमनाघ्रातपूर्वमामोदमभ्यजिघ्रम् । तस्याद्भुतस्यामोदस्य प्रभवं जिज्ञासमाना किञ्चिदन्तरं गत्वा कञ्चिन्मुनिकुमारकमपरमिव कन्दर्पं मेखलाजिनवल्कलै रूपस्यासदृशैरपि कृताधिकतरशोभं सवयसाऽपरेणानुगम्यमानं दृष्टवती । तेन कर्णे कृतायाः कस्यचिदपूर्वस्य तरोर्मञ्जर्या आमोदोऽसौ यो मया समाघ्रातः । तमुद्दिश्य रूपैकपक्षपातिना गुणदोषानपेक्षिणा कुसुमघ्राणेनात्मनो वशं नीताहम् । ततोऽपसर्तुकामाप्यहं केनापि प्रेर्यमाणेव तदन्तिकमुपसृत्य मुनिजनो वन्दनीय इति कृत्वा तन्मुखन्यस्तदृष्टिस्तस्मै प्रणाममकरवम् । ततः कृतप्रणामायां मयि दुर्लङ्घ्यशासनतया भगवतो मनोभुवो मदजननतया तस्य मासस्याविनयबहुलतया यौवनस्य चञ्चलप्रकृतितया चेन्द्रियाणां तमपि तरलतामनयदनङ्गः । अथाहं तस्य पार्श्वस्थं तुल्यतेजस्तपोवेषं मुनिकुमारमप्राक्षम् । भगवन्, कथ्यतां कोयं कस्य वा कुतो वाऽत्रागमः कस्य च तरोर्मञ्जरी कर्णे निहिता यस्या अयमामोद इति । सोऽब्रवीत् । सुरलोके श्वेतकेतुरिति ख्यातो रूपेणाप्रतिमो मुनिरस्ति । एकदा पुण्डरीकसरासि स्नातुं गतमेनं लक्ष्मीर्व्यलोकयत् । सा तद्दर्शनेनैव केवलं स्वासनीकृते पुण्डरीके कृतार्थत्वमवाप । तदैव कुमारः समुत्पन्नो यस्तव पुत्रोऽयमित्युक्त्वा श्रिया श्वेतकेतवे निवेदितः । सोऽपि योगदृशा दृष्ट्वा सुतं परिगृह्य तस्य जन्मोचितं पुण्डरीक इति नाम व्यदधात् । अद्य चतुर्दशीति कृत्वा शिवालयं गच्छतोऽस्य कर्णे दुग्धोदधिसमुद्भवात् पारिजातद्रुमादेषा मञ्जरी वनदेवतया स्वयं निवेशितेति । एवं तस्मिन्वदत्येव चपले गृह्यतामियं

किमनेन तव प्रश्नेनेति मामभिधाय तेन मुनिकुमारेण सा सुरद्रुम-मञ्जरी निजात्कर्णादपनीय मम कर्णावतंसतां नीता । मत्कपोलतलस्पर्शप्रकम्पतरलाङ्गुलेर्हस्तात्प्रस्खलिताऽपि मन्मुखासक्तदृष्टितया नालक्षिता तेनाक्षमाला । पतन्ती साऽक्षमाला भूमिमप्राप्तैव मया गृहीता । एतस्मिन्नन्तरे छत्रग्राहिणी मामवोचत् । भर्तृदारिके देवी स्नाता गम्यतामिति । ततः प्रतिनिवृत्तायां मयि स सखा तमवदत् । वयस्य केयमद्य तरलता तव चेतसः । अनया कन्ययाऽपहृतामप्यक्षमालां नाज्ञासीः । हृता नामेयम् । अनयाऽपाह्रियमाणं हृदयं रक्ष्यतामिति । ततोऽसौ पुनरागत्य कृतकक्रोपं कृत्वाऽक्षमालामपहृत्य क्व गम्यते त्वयेति मामवदत् । अहमपि विहस्य कण्ठान्मुक्तावलीमवमुच्यास्य करेऽक्षमालेति निहितवती । साऽपि मदाननबद्धदृष्टिना नालक्षिता तेन । ततोऽहं यथाकथंचित्स्नात्वा सहाम्बया गृहं गता सकलाः सखीर्विसृज्यैकाकिनी स्वभवने स्थिता । मोहविसंष्ठुला क्व गतास्मि किमुक्तास्मि किं कृतवती तत्सर्वं नाज्ञासिषम् । मुहूर्तादेव मम ताम्बूलकरङ्कवाहिनी प्रियसखी तरलिका प्रविश्य मामब्रवीत् । भर्तृदारिके त्वय्यागतायां येन कुमारेण तव कर्णे मञ्जरी कृता तेनाहं त्वद्गतं वृत्तं पृष्टा । तच्छ्रुत्वा वस्त्रपट्टिकायामार्यां लिखित्वा त्वयैकाकिन्यै तस्यै देयेति स मत्करे वस्त्रपट्टिकां समर्पितवानिति । ततस्तरलिकाहस्तादादाय तां पट्टिकामहं तामार्यामवाचयम् । वद तेन किमुक्तासि स त्वया किमुक्त इति तरलिकां पुनः पुनः पृच्छन्ती कञ्चित्कालमनयम् । अथ प्रलम्बमानेऽर्के प्रतीहारी प्रविश्योवाच । भर्तृदारिकया यौ तौ मुनिकुमारकौ दृष्टौ तयोरेकतरो द्वारि तिष्ठतीति । शीघ्रं प्रवेशयेत्युक्त्वा सा मत्प्रियस्य सहचा-

रिणं प्रवेशयामास । उचितेन सत्कारेण मया पूजितः स मदुपाह्वते पर्यङ्के मुहूर्तमिव विश्रम्य मयागमनकारणं पृष्टोऽभ्यधात् । अहं कपिञ्जलो नाम तस्य मुनिकुमारस्य बालसुहृत् । लज्जया वागपि मे नावतरत्यभिधेयविषयम् । क्वायं शान्तो मुनिजनः, क्व चामी रागविभ्रमाः । तथापि **कृत्वाऽकार्यशतं सुहृत्प्राणा रक्षणीया** इति व्यवसितमेतन्मया । राजपुत्रि, प्रयातायां त्वयि हस्ते मुक्तावलीं विभ्रत्स मदन्तिकमुपागतः । नोपदेशप्रकारोऽसौ, न स दृष्टान्तविस्तरः, न सोऽस्त्युपायो मन्त्रो वा यो मया नाभ्यधीयत । वचोभिर्मे खिद्यमानं तं विहाय कुसुमावचयायाहमन्यतोऽगच्छम् । पुनः प्रतिनिवृत्य किमयमाचरतीति ज्ञातुमिच्छन्प्रदेशं तं व्यलोकयम् । यावत्तं नाद्राक्षं तदा तदन्वेषणाय सुचिरमचरम् । सकलं विचित्य वनं तं लब्ध्वा तस्यावस्थां दृष्ट्वा विगताशस्तत्प्रबोधने तत्प्राणरक्षार्थं सयत्नोऽभवम् । नलिनीपत्रशयनं कल्पयित्वा तस्मिंस्तं स्थापयित्वा शीतलेन चन्दनरसेनाङ्गानि विलिप्य कदलीदलेन व्यजनक्रियामन्वतिष्ठम् । स तदवस्थोऽपि त्रपया किञ्चिदपि वक्तुमक्षमो बाष्पमलिनां दीनां दृष्टिं मय्यपातयत् । ततोऽहं त्वदधीनाः सुहृदसव इति मत्वा सुहृत्प्राणदक्षिणार्थमुपागतस्त्वामिति । एवं वदत्येव तस्मिन्कञ्चुकी प्रविश्योवाच त्वमस्वस्थशरीरेति ज्ञात्वा देवी त्वां द्रष्टुं समागच्छतीति । तच्छ्रुत्वा जनसंमर्दभीरुः कपिञ्जलो मदीयं प्रतिवचनमनपेक्ष्यैव निर्गतः । तत्प्रियस्य दशां कपिञ्जलादुपश्रुत्याम्बया किमभिहितास्मि कदा च सा गतेत्यहं नालक्षयम् । ततः कमलिनीरमणेऽस्तङ्गते कुमुदबान्धवे चैन्द्री दिशमलङ्कुर्वाणे कामेनोन्मूलितेव तरलिकां साश्रुकण्ठमवादिषम् । मत्कृते स कथं भविष्यतीत्येषा चिन्ता मां

दहति । इतः शास्त्रं कुलाचारो लज्जा गुरुजनाद्भयम्, इतश्च कामो वसन्तो विरहो मरणाद्भयम् । वद किं करवाण्यत्रेति । एवमुक्त्वाऽहं मूर्च्छां गता । शीतजलानिलैर्मां सञ्ज्ञां ग्राहयित्वा साश्रुनेत्रा तरलिकाब्रवीत् । किं शास्त्रं गुरवः केऽत्र का लज्जा का च कुलस्थितिः । आत्मनस्तस्य च यूनः प्राणा रक्ष्यन्ताम् । अन्योन्येच्छया सङ्गमो गन्धर्वाणां विवाह इति शास्त्रेषु पठितं तस्मादुत्तिष्ठेति । तयैवमुक्ता तत्कालोचितवेषं विरचय्य तामेकामग्रतः कृत्वा गृहान्निर्गताहम् । औत्सुक्येन कृतत्वराया मे वामेतरच्चक्षुः पस्पन्दे । इमां भूमिमागता काननेऽव्यक्तं रुदितध्वनिमश्रौषम् । कतिचित्पदानि गत्वा पुण्डरीक क्व यातोसि हा हतोऽस्मि किं करवाणि, तातस्य श्वेतकेतोः पुरतः किं वक्ष्यामि, पापे महाश्वेते, अक्षमालया न तुष्टासि सुहृदः प्राणा अपि त्वया हृताः, वयस्य वाचं मे देहि त्वया विना न जीविष्यामीति विलपन्तं कपिञ्जलमश्रौषम् । प्रवेपमानाङ्गी केनाप्युत्क्षिप्येव नीता तं प्रदेशं प्राप्य तत्क्षणोत्क्रान्तजीवितं प्रियमद्राक्षम् । एतावदुक्त्वा पुनर्नवीकृतशोकभरेणाक्रान्ता मूर्छां गता सा कन्या भूमौ पपात । प्रनष्टसञ्ज्ञां चैनां कदलीदलमारुतैः शिशिरैस्तोयैश्च प्रकृतिमापाद्य प्रश्नकारिणमात्मानं कृतागसममन्यत चन्द्रापीडः । तां च बभाषे । आस्तां तावत् । नातः परं वक्तुं श्रोतुं वा शक्यत इति । कथमप्युपसंहृत्य शोकावेगं सावदत् । किमतः परमस्ति वाच्यं श्रोतव्यं वा । किं तु येन हतजीवितं बिभर्मि तदाश्चर्यं ब्रवीमि । तस्य तथाविधस्य दुःखस्य मरणादन्यां प्रतिक्रियामपश्यन्ती मरणव्यवसायनिश्चला यावत्संविधानकं करोमि तावच्चन्द्रमण्डलात्कोऽपि हिमोपमद्युतिः पुरुषो निर्जगाम । महीतलेऽवतीर्य तं मत्प्रियं

भुजपञ्जरान्तरे निधाय दिवमुत्पतान्पितेव सान्त्वयन्मामुवाच। महाश्वेते विरम मरणोद्योगादस्मात्। पुनरपि तवानेन सह सङ्गमो भविष्यतीति। तां गिरं श्रुत्वा विस्मिता यावत्किमिदमिति कपिञ्जलमपृच्छं तावत्सोऽपि क्व मदीयं प्रियसखमपहृत्य गच्छसीति सकोपमभिधाय प्रतिवचनमदत्त्वैव कृतपरिकरोऽन्तरिक्षमुदपतत्। पश्यन्त्यां मयि ते त्रयोऽपि शीतांशोर्मण्डलं विविशुः। अहमत्र व्रतस्थाऽतिष्ठम्। इमं वृत्तान्तं श्रुत्वा मां गृहं नेतुं तात आगतः। यदा मामीप्सितार्थस्थिरनिश्चयां जज्ञौ तदा गृहं गत इति।

एवमावेदितनिजवृत्तान्ता महाश्वेता प्रत्यग्रीकृतशोका विरराम। चन्द्रापीडस्तं वृत्तान्तं श्रुत्वा विस्मितमनास्तां सान्त्वयन् प्रोवाच। भगवति, कौतुकाविष्टचेतसा मया परिणामेऽदत्तदृष्टिना चिरवृत्तोऽपि तव शोकः प्रत्यग्रतां नीतः। शोकं त्यक्तुमर्हसि यतो देवेन चन्द्रमसा स्वयमाश्वासिताऽसि। तस्य त्वत्प्रियस्य श्वेतकेतुः प्रजापतिसमः पिता। तस्य तपसामसाध्यं नाम किंचन न विद्यत इति। एवं तां समाश्वास्य पुनः पप्रच्छ। सा ते सर्वविश्रम्भस्थानं प्रियसखी तरलिका क्व गताद्येति। महाश्वेतोवाच। शृणु यत्र मया सा प्रहिता। यः स गन्धर्वाधिपतिश्चित्ररथो मया पूर्वमुपवर्णितो येनेदं महेश्वरायतनं प्रत्यष्ठापि सर इदमच्छोदाख्यं खानितं चैत्ररथं नाम काननं च निर्मितं तस्यामृतसमुद्भूतेऽप्सरसां कुले जाता प्राणेभ्योऽपि प्रेयसी मदिरा नाम महिषी। तयोः कादम्बरी नाम कन्या जज्ञे। रूपलावण्यविभ्रमैर्लक्ष्मीमुपहसन्त्या तया सह मम बाल्यात्प्रभृति महत्प्रेम ववृधे। मद्गतं वृत्तान्तमुपलभ्य यावन्महाश्वेताऽस्य दुःखस्य पारं न गच्छति तावन्मयाऽऽत्मनः पाणिग्रहणं नैव कर्तव्यमिति नियमं

न्धुभिर्वार्यमाणाऽपि साऽग्रहीत्। चित्ररथः परं खेदमापन्नः सन्दिष्टवान्। महाश्वेते तथा यतस्व यथा तवेयं स्वसा दुर्ग्रहं विमुञ्चतीति। अतः कादम्बरीं प्रबोधयितुं मया तरलिका प्रेषिता सा च श्व आगमिष्यतीति। इत्थं महाश्वेताकथया दिनं नीत्वा चन्द्रापीडोऽर्केऽस्तं प्रयाते सन्ध्याविधिं व्यदधात्। ततो महाश्वेतानिर्दिष्टे देशे पर्णशय्यामकल्पयत्। इन्द्रायुधोऽपि निचुलवृक्षे चन्द्रापीडेन संयमितो महाश्वेतामुखे बाष्पार्द्रां दृशं सप्रत्यभिज्ञामिव ददौ। यामिन्यां प्रयातायां कृतप्राभातिकक्रिये चन्द्रापीडे समाधेरुत्थितायां महाश्वेताया अन्तिकमुपागते तरलिका सगन्धर्वकुमाराऽऽययौ। सा महाश्वेतां प्रणिपत्योपविश्य चाब्रवीत्। भर्तृदारिके, त्वत्सन्देशं निशम्य यत्कादम्बर्योक्तं तत्त्वं तच्छासनायातकेयूरकमुखाच्छृण्विति। केयूरकः प्रोवाच। देवी कादम्बरी भणति। किमिति त्वमसंविदानेव मन्मनः परीक्षसे। अथवा त्वयि तपोवननिवासिन्यां यदहं स्वगृहे वर्ते तेनोपालम्भोऽयं मयि पातित इति। एष ते प्रियसख्या प्रतिसन्देशः कथित इति। एतच्छ्रुत्वा क्षणं किञ्चिच्चिन्तयित्वा महाश्वेता चद्रापीडमभाषत। राजपुत्र, तव पेशल आचार आकारश्च निस्पृहाणामपि स्पृहां जनयतः। कादम्बरीवचस्त्वया श्रुतमेव। तस्माद्मद्गमनादृते न कोऽपि प्रतीकारः। इतो नातिदूरे गन्धर्वराजधानीं गच्छावः श्वः स्ववाहिनीं च प्रत्येष्यसीति। चन्द्रापीडः प्रत्युवाच। भगवति, बहूक्त्वाऽलम्। त्वया सह गमिष्यामीति। ततो महाश्वेता सह चन्द्रापीडेन पद्भ्यामेव गन्तुं प्रावर्तत। केयूरकोऽग्रतो गत्वा कादम्बर्यै चन्द्रापीडस्यागमनं गुणानाकारं च न्यवेदयत्। कश्चिदध्वानं गत्वा चन्द्रापीडोऽपराममरावतीमिव गन्धर्वराजनगरीमासाद्य सप्त कक्षा अतिक्रम्य कन्यान्तःपुर-

मभ्यगात् । केयूरकोपदिष्टेन मार्गेण प्रविश्य भास्वन्मणिमयस्तम्भे श्रीमण्डपे मणिपर्यङ्कमध्यासीनां महता स्त्रैणेन परिवारितां प्रतप्तकनकप्रभयाऽङ्गकान्त्या भ्राजमानां नवे वयसि स्थितां कादम्बरीं ददर्श । कादम्बरी महाश्वेतां दृष्ट्वा प्रत्युत्थाय प्रत्युद्ययौ । महाश्वेताऽपि तां निर्भरमालिङ्ग्य चन्द्रापीडनिर्देशपुरःसरमभाषत । अयं भारते वर्षे सार्वभौमस्य तारापीडस्य तनयश्चन्द्रापीड इहागतः । अस्मिन्दृष्टेऽखिलगन्धर्वकुटुम्बके महोत्सवो भवत्विति । कादम्बरी चन्द्रापीडे पक्ष्मोत्क्षेपविकासिनीमाकर्णप्रसृतापाङ्गां दृशं चिरमपातयत् । कादम्बर्याः शरीरनिर्विशेषा प्रियसखी मदलेखा नाम चन्द्रापीडस्य चरणक्षालनं व्यधात् । कादम्बरी तु महाश्वेतया प्रेर्यमाणा सस्वेदप्रकम्पिकरपल्लवा ताम्बूलच्छद्मनाऽस्मा आत्मानं न्यवेदयत् । तदङ्गुलितलस्पर्शमाधुर्यहृतमानसा सा रत्नवलयं कराद्गलितं नाज्ञासीत् । ततः क्षणमात्रे व्यतीते कञ्चुकी महाश्वेतां प्रोवाच । राजपुत्रि त्वां द्रष्टुं देवी वाञ्छतीति । क्रीडापर्वतके मन्दिरे चन्द्रापीडं सुखासीनं कृत्वा महाश्वेता कादम्बरीमातुरन्तिकं जगाम । अध्यासितपर्यङ्कं चन्द्रापीडं केयूरको मुख्याः सख्यश्च सिषेविरे । मन्दप्रभे भानौ मदलेखाद्वितीया कादम्बरी निजं प्रासादशिखरमारुरोह । तत्रस्था क्रीडापर्वतवर्तिनं चन्द्रापीडमाकर्णप्रसृतापाङ्गया दृशा निर्वर्ण्य पिबन्तीव सतृष्णाभ्यां नेत्राभ्यां तल्लावण्यं मदलेखामुवाच । सखि, न मया मदनो नाम कथास्वपि श्रुतः । अद्य स चन्द्रापीडविग्रहः प्रत्यक्षतो दृष्टः । अपि नाम तदानीं मे विकारो महाश्वेतया न लक्षितो भवेत् । निजसङ्कल्पविरुद्धामिमामतिस्फुटामपि मनसो विकृतिं संहरामि । तथापि हारोऽयमुचितं मण्डनमस्याकृतेस्त्वयाऽनिच्छतोप्यस्योरसि विमुच्यता-

मिति । मदलेखा हारं गृहीत्वा चन्द्रापीडस्यान्तिकं गत्वा तस्य कण्ठे हारममुञ्चत् । हारेण कृतमण्डनश्चन्द्रापीडो नक्षत्रकलापपरिवारितः पूर्णेन्दुरिव रेजे । कादम्बरी चिरं तमवलोक्य निशागमे प्रासाद-शिखरादवातरत् । चन्द्रापीडोऽपि कृतसन्ध्याविधिः शय्यायामासी-नोऽचिन्तयत् । ये मया दृष्टा गन्धर्वकन्याया विलासास्ते सहजाः स्युरुतेमं जनमुद्दिश्य बालां स्मरो नर्तयति । अथवा यौवनोन्मादकृत एष मम भ्रमः । क्व मनुष्यः क्व गन्धर्वः । कालेन सर्वं व्यक्तं भविष्यति मम सैनिकानां तु काऽवस्थेति । इति चिन्तयन्नेव निद्रा-मवाप । अपरेद्युरुत्थाय कृतप्राभातिकक्रमः कादम्बरीं महाश्वेतां च दृष्ट्वा तयोरनुज्ञामवाप्येन्द्रायुधमारुह्य गन्धर्वपरिवृतः पृतनां प्रति प्रस्थितः । गच्छन्निजं स्कन्धावारं केनाप्युपायेन लब्धमार्गं सरस्तीरे सन्निविष्टं विलोक्य वैशम्पायनं पत्रलेखां च स्ववृत्तान्तविदौ चक्रे । तस्यामतीतायां निशि रवावुदिते केयूरको हेमकूटादागत्य तमभाषत । कुमार, बलवदस्वस्थशरीरा कादम्बरी त्वां चाभीक्ष्णं दिदृक्षत इति । तद्वचः श्रुत्वा चन्द्रापीडः सह पत्रलेखया हेमकूटं तूर्णं ययौ । महाश्वेतामभिवन्द्य ततः कादम्बरीमुद्याननलिनीतीरकल्पिते हिम-मन्दिरे कदलीदलशय्यानिषण्णां ददर्श । चन्द्रापीडदर्शनेनैवाश्वासिता सोत्थातुमिच्छन्ती तेन निवारिता । ततस्तयोः कुशलसंप्रश्नपुरःसरा-श्चित्रा नर्मगिरः प्रावर्तन्त । तत्र चिरं स्थित्वा चित्रैरालापैस्तस्यै निजाशयं निवेद्य तद्वचनानुरोधात्तदन्तिके पत्रलेखां निधाय केयूरक-द्वितीयः पुनः कटकं ययौ । तत्र पूर्वेद्युरुज्जयिन्या आगतं लेखहार-कमुपलभ्य पितुराज्ञां स्वयमवाचयत् । एकतोऽलङ्घनीयया गुरुज-नाज्ञयाऽन्यतः कादम्बरीगतेन प्रेम्णाऽऽकृष्यमाणहृदयश्चन्द्रापीडो

मन्युः सह्यतामहं पुनरागन्तास्मीति सन्दिश्य केयूरकं कादम्बर्यै प्राहिणोत् । ततो वैशम्पायनमभ्यभाषत । वयस्य, त्वं महतीं वाहिनीमधितिष्ठञ् शनैरागच्छ स्वल्पैर्वाजिभिः परिवृतोऽहं सत्वरमग्रतो यास्यामीति । किञ्चिदन्तरं गत्वा कञ्चिच्चण्डिकाश्रममध्यास्त । तत्र च कस्यचिद्द्रविडधार्मिकस्य रूपवेषभाषातपश्चरणसिद्धिकथाविनोदैर्निशां नीत्वा कतिपयैरेवाहोभिरुज्जयिनीं प्राप ॥

Kádambarî and Kâdambarî-
kathásâra of Abhinanda.

---

## XIV.

## TALE OF KÂDAMBARÎ.

### Part II.

नगरीं प्रविश्य पितरौ शुकनासं च समुपास्य चन्द्रापीडः कुमारभवनमध्यास्त । तत्र कादम्बरीमेवैकां सततं ध्यायतस्तस्य न किमपि प्रीतये वभूव । केयूरकान्मामिहागतं ज्ञात्वा सा किं कुर्यात्पत्रलेखां वा किं ब्रूयादिति रात्रिंदिवं सोऽचिन्तयत् । एवं कालमत्यवाहयता तेन स्वस्य गूढो भावस्तथा रक्षितो यथा तस्य शून्यमनस्कतां पितरौ नैवाधिजग्मतुः । व्यतीतेषु केषुचिद्दिनेषु पत्रलेखा वलाहकेन पथि कृतरक्षा चन्द्रापीडं प्रापत् । चन्द्रापीडस्तस्या दर्शनेनैव समुच्छ्वसितमानसस्तां रहस्यप्राक्षीत् । किमस्माकं कादम्बरी स्मरति । अपि नामास्मदागमनेन न रोषं गतेति । ततः पत्रलेखा चन्द्रापीडं साभ्यसूयमवलोक्योवाच । देव किमेतया चिन्तया तव । गुरूनेव चिरं समाराधय । तामभिनवभावार्द्रां वालां तनुलतामिव

तीव्रे विरहदावाग्नौ किमिति क्षिप्तवानसि। केयूरकमुखात्तव गमनं निशम्य सा वज्राहता शालिवल्लरीव व्यकम्पत। ततः प्रभृति वर्धमानैर्दिनैर्ग्रीष्मनिशेव सा निःश्वासैः शनैः शनैः क्षीयते स्म। सकलानि मण्डनानि विहाय केवलं रुदती सा तिष्ठति। तस्या विरहावस्थां वर्णयितुं न पारयामि। भूमौ विचेष्टमानाङ्गी मदुत्सङ्गे मुखं निधाय सा मामब्रवीत्। उत्तिष्ठानय तं जीवन्तीं मां यदीच्छसि। अहं गन्तुमशक्तेति। तदवस्थां दृष्ट्वाऽहं यातास्मि, अतः परं देवः प्रमाणमिति। विरतवचसि तस्यां चन्द्रापीडः केन मिषेण मया गन्तव्यमित इति दध्यौ। केषुचिद्दिवसेषु गतेषु केयूरकोऽपि कादम्बरीदशां वक्तुमागतः। पर्यङ्कनिषण्णग्लानविग्रहं पत्रलेखया चामरेण वीज्यमानं चन्द्रापीडं दृष्ट्वा प्रणिपत्योपविष्टः केयूरकः। ततः कादम्बरीवार्तां चन्द्रापीडेन पृष्टः पत्रलेखाया मुखं वीक्ष्याब्रवीत्। पत्रलेखया किंचिदुक्तोऽसि। उक्तश्चेत्किमिह स्थितः। तयोक्तोऽपि स्थितोऽसि किं ममागमनेनेति। चन्द्रापीडेन सन्देशकथनाय चोदितः केयूरको बभाषे। कथं जीवत्सु युष्मासु विरहो हन्ति मामिति तस्याः साकूतया दृष्ट्या विसृष्टोऽस्मि न गिरा। किं बहुनोक्तेन। तथाऽस्या विरहव्यथा यथाऽद्यापि सा जीवति वा न वेति मम मनः संशयदोलाधिरूढमिति। यद्यहं न राक्षसश्चाण्डालो वा तर्हि मामचिरेणैवाच्छोदसरसस्तीरं प्राप्तं जानीहीति सन्दिश्यान्येद्युः पत्रलेखया सह केयूरकं प्राहिणोत्। तयोर्गतयोः खिन्नमानसो गमनाय किंचिन्निमित्तं यावन्न्यरूपयत्तावत्स्वसेनां निवृत्तां नगर्या योजनद्वयमात्रायां भूमौ कृतनिवेशां शुश्राव। वैशम्पायनतः किञ्चिन्निमित्तं लप्स्य इति मत्वा पितुराज्ञया कटकं जगाम। तत्र

बलाहकनिवेदितं राजकमालोक्य क्व वैशम्पायनावास इति सेनान्यमभ्यधात् । सेनानीर्बलाहकोऽधोमुखो मेदिनीमुल्लिखन् सन्नकण्ठोऽभाषत नात्र वैशम्पायन इति । ततस्तुरगादवतीर्य तरोरध उपविश्य हा वयस्य क्व मां विहाय गतोऽसीति रोदितुं चन्द्रापीडः प्रावर्तत । बलाहकः पादयोर्निपत्योवाच । देव, मैवं कृथा वैशम्पायनो जीवत्येवेति । चन्द्रापीड उवाच । नैतच्छ्रद्धेयम् । वैशम्पायनो जीवन् मुहूर्तमपि मया विना न स्थास्यतीति । बलाहक उवाच । देव श्रूयताम् । गते भवति वैशम्पायनोऽपरेद्युरुत्थायात्मानं विनोदयितुं वनस्थलीर्विचचार । तत्र सप्रत्यभिज्ञानं स्थानं स्थानं निरूपयन् किञ्चिन्नष्टमिवान्वेष्टुमैच्छत् । ततोऽस्ताचलचूडावलम्बिनि भानौ श्वो द्रक्ष्यसि वनस्थलीरिति सोऽस्माभिरभिहितः । अथासौ साभ्यसूयमुवाच । यूयं यात न मयेतो गन्तव्यमिति । तत्रैव वने विचरन्बहूनि दिनान्यास्त । कृतप्रायोपवेशेन पादपतितेन राजकेनाभ्यर्थितोऽपि यदा न चचाल तदा तत्र चिरं स्थित्वा कार्यं किमप्यपश्यन्नहं सैन्येन सहायातः । अतः परं देवः प्रमाणमिति । तच्छ्रुत्वा विस्मितमानसश्चन्द्रापीडस्तत्रैव तरुतले निषण्णः । इमां वार्तां श्रुत्वा सान्तःपुरो नृपस्तारापीडस्तमेवोद्देशमाजगाम । बलाहकं स्वयं पृष्ट्वा राजाऽधिक्षिपन्निव चन्द्रापीडमुवाच । नूनं त्वयैवास्य मन्युरुत्पादितो येन त्वां विहाय वनं श्रितः । युवां पुरा क्षणमपि वियुक्तौ न दृष्टौ किं जातमधुना येन त्वं गृहे वर्तसे स तपोवन इति । तारापीडवचः श्रुत्वा शुकनासोऽन्तःस्फुरितशोकोऽपि क्षोभं संस्तभ्याभ्यधात् । राजन्, किमविचार्यैव कुमारमधिक्षिपसि । पापः स एव दुर्जातो वैशम्पायनः । कुमार त्वमस्य कृते शोकं वोढुं नार्ह-

सीति । चन्द्रापीडः पितुः पादयोः पतित्वा प्राञ्जलिः सगद्गद-मुवाच । तात शङ्कितदोषस्य ममेदं प्रायश्चित्तं यत्स्वयं गत्वा तमानयामि । तमनानीय मया गृहं नैव प्रवेष्टव्यमिति मे निश्चयः । तस्मान्मामनुजानीहीति । शुकनासस्तं निश्चयान्निवारयितुं प्रायतत । मनोरमाप्युवाच । कुमार, त्वयि स्थिते पुत्रकं निजोत्सङ्गगतं पश्यामि । त्वयि गते नूनमन्धीभवाम्येवेति । एवं तया विलासवत्या च करुणोक्तिभिर्निवार्यमाणोऽपि निश्चयं नाजहात् । ततो नृपो यथा जानासि पुत्रेत्यश्रुभरसंरुद्धगद्गदाक्षरया गिरोवाच । पित्रा दत्ताभ्यनुज्ञो गुरून्प्रणम्य श्रान्तान्पार्थिवान् विनिवर्त्य लघीयसा परिवारेण प्रातिष्ठत । राजापि किं मयाऽभ्यनुज्ञात इति शुचा दूयमानो नगरीं विवेश । बलाहकस्तु सेनानीर्निवार्यमाणोऽपि चन्द्रापीडमन्वगात् । चन्द्रापीडो दयितादर्शनोत्सुकः कैलासविन्ध्ययोरन्तरं नैवाजीगणत् । कतिपयैरेवाहोभिरच्छोदसरस्तीरं प्राप्य महाश्वेतां द्रष्टुं तस्या आश्रमं जगाम । तद्दर्शनेनैव लज्जितां करुणं विलपन्तीमात्मानं निन्दन्तीं तामुपलभ्य चन्द्रापीडः कारणं पप्रच्छ । अश्रुविप्लुतमुखी सा जगाद । केयूरकमुखात्त्वां पितुराज्ञया गतं ज्ञात्वा कादम्बर्या निकेतने कतिचिद्दिनानि स्थित्वा यावदेतत्तपोवनं प्रतिनिवृत्ता तावद्वनस्थलीर्विचिन्वन्तं युवानं विप्रमद्राक्षम् । मां प्रत्यभिज्ञायेव मदनोत्सुको भूत्वा नर्मवचोभिरुद्वेजयामास । मया निर्भर्त्स्यमानोऽपि वार्यमाणोऽपि बहूनि दिनानि माममुञ्चन्महतीं पीडामकरोत् । एकदा निशि शयनगतां मामागत्य निस्त्रपः प्राञ्जलिः समागमदक्षिणामयाचत । ततः क्रोधेन परवशया मया धिक्त्वां दुराचारमित्यभिधाय कमण्डलोर्जलमुद्धृत्य देवता अनुध्याय स शप्तो

यदि पुण्डरीकमेकं विहायान्यं पुरुषमहं स्वप्नेऽपि न चिन्तयामि तर्हि कार्याकार्यविवेकशून्यस्त्वं शुकवत्केवलं वक्तुमेव शिक्षितो दुराचारः शुक एव भवेति। निर्गतमात्रे वचसि तेन महता शापेन वा मदनानलेन वा जन्मान्तरोपचितदुष्कृतैर्वा भवितव्यतया वा स विगतासुर्भूमौ निपपात। अपरेद्युराक्रन्दतः परिजनात्स भवतः सखा शुकनाससुतो वैशम्पायन इति मया ज्ञातम्। एवं त्वत्प्रियवयस्यप्राणहरणहेतुरहं दुर्जाताऽभव्या त्वां मुखमपि दर्शयितुं लज्ज इति। एतच्छ्रुत्वा शोकस्फुटितहृदयः कमलमुखि कादम्बरि कदा त्वां द्रक्ष्यामीति वदन्नेव चन्द्रापीडोऽसूञ्जहौ क्षितितले च च्छिन्नमूल इव द्रुमः पपात।

वैशम्पायनविनाशश्रवणस्यानन्तरं चन्द्रापीडः शोकार्तो भवेदिति शङ्कमाना महाश्वेता कादम्बरीं तत्समाश्वासकारणं सम्भाव्य तामानेतुं तरलिकां प्राहिणोत्। महाश्वेतासन्देशेन जातोत्साहा कादम्बरी चन्द्रापीडसम्भावनाय कुसुमगन्धताम्बूलादि गृहीत्वा प्रियसख्या मदलेखया सह पत्रलेखां पुरस्कृत्य महाश्वेताश्रमं ययौ। आयान्त्यास्तस्याः शिवारुतादीनि दुर्निमित्तानि हृदयोत्कम्पं व्यदधुः। उदिते निशानाथे महाश्वेताश्रममासाद्य वनान्तकन्दरोद्भूतप्रतिध्वनिकरुणं विलपितं श्रुत्वा यावत्सत्वरमाश्रमं प्राविशत् तावत्प्राणनाथं तथा स्थितं महाश्वेतां चार्तनादं रुदतीं ददर्श। तत्क्षणं च मोहमुपागच्छत्। पत्रलेखाऽपि चन्द्रापीडमुखं विलोक्य सञ्ज्ञां मुमोच शिलातले च निपपात। कादम्बरी सञ्ज्ञां लब्ध्वा तरलिकां सर्वं वृत्तान्तमपृच्छत्। तमाकर्ण्य कादम्बरी महाश्वेतां मदलेखां चावदत्। न शक्नोमि रोदितुम्। अयं मे नाथः सुहृन्मरणं श्रुत्वा नारोदीन्न वा विललाप

प्राणांस्तु केवलं जहौ । स एव मे पन्थाः । महाश्वेते तव प्राणधारणं युक्तमेव यतो देवताभिस्त्वं प्रियसमागमं प्रत्याश्वासिता । विधिभग्न-मनोरथाया मे किं पुनरेतैर्दुर्भगैः प्राणैरिति । एवमुक्त्वा कादम्बरी मदलेखां केयूरकं च काष्ठान्याहृत्य चितां रचयितुमादिदेश । एवं कादम्बरीं मरणव्यवसायिनीं दृष्ट्वा सकलः कन्यकाजनस्तारं रोदितु-मारेभे । अथ कोऽपि दिव्याकृतिर्नवनीरधरधीरगर्जितध्वानिः पुरुषो गगनस्थितोऽभ्यधात् । वत्से महाश्वेते, त्वं पूर्वं मयाश्वासिता । तव प्रियः पुण्डरीकोऽद्यापि मदन्तिके स्थितः । अयं चन्द्रापीडः कश्चि-त्कालं सुप्त इव स्थित्वाऽक्षीणकान्तिः स्थास्यति । अचिरेणैव कालेन कादम्बर्याः कण्ठग्रहं करिष्यति । मम वचसि भवत्योर्दृढः प्रत्ययो-ऽस्त्विति । एवमुक्त्वा स ज्योतिर्मयः पुरुषोऽन्तर्दधे । तस्य वचनेन लब्धसञ्ज्ञा पत्रलेखा समुत्थाय त्वरितैः पदैर्गत्वेन्द्रायुधमादाय सटायां गृहीत्वा तेनैव सहागाधे सरसि ममज्ज । किमपि शङ्कमाना तरलिका तामनुगच्छन्ती पयोमध्यादुद्गच्छन्तं कपिञ्जलं ददर्श । तदद्भुतं तस्या मुखाच्छ्रुत्वाऽखिलः कन्याजनः परं विस्मयमुवाह । जलार्द्र-वल्कलोऽम्बुकणोद्गारिणीर्जटा बिभ्रत्कपिञ्जलः स्वयमभ्येत्योवाच । महाश्वेते, अपि प्रत्यभिज्ञायतेऽयं जनः । अहं तव दयितस्य प्रिय-वयस्यः कपिञ्जलः । मदीयं वृत्तान्तं शृणु । कृतार्तप्रलापामपि त्वामुत्सृज्य वयस्यशरीरहारिणं पुरुषमनुबध्नंस्तं चन्द्रमण्डलप्रविष्टं दृष्ट्वाऽहमपि प्रविष्टवान् । मामवलोक्य सोऽब्रवीत् । कपिञ्जल, मां मृगाङ्कं विद्धि । अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठ-न्ननेन ते प्रियवयस्येन कामापराधाज्जीवितं समुत्सृजता निरपराधः संशप्तः । दुरात्मन्निन्दुहतक, यथाहं त्वया करैः सन्तापितोऽप्राप्तव-

ल्लभासमागमसुखस्तथा त्वमपि कर्मभूमिभूतेऽस्मिन्भारते वर्षे जन्मनि जन्मन्येवमेव प्राप्तानुरागोऽप्राप्तसमागमसुखो जीवितमुत्स्रक्ष्यसीति । अहं तु निरागास्तेनैवं शप्तः समुत्पन्नकोपस्त्वमपि मत्समानसुखदुःखो भविष्यसीति तस्मै प्रतिशापमयच्छम् । अपगतामर्षश्च मन्मयूखसम्भवाप्सरःकुललब्धजन्मना महाश्वेतया पतित्वेन वृतो जामाता ममेति पश्यन् सानुतापोऽभवम् । अनेन च तव मित्रेण वारद्वयं मर्त्यलोके मयोत्पत्तव्यमन्यथा जन्मनि जन्मनीति वीप्सैव न चरितार्था भवेत् । यावदस्य शापदोषो व्यपैति तावदस्य शरीरस्य विनाशो मा भूदिति मयोत्क्षिप्यानीतं तच्छरीरम् । कपिञ्जल त्वं गत्वेमं वृत्तान्तं महाश्वेतायै निवेद्य तामाश्वासयेति । इदं चन्द्रमसो वाक्यं श्रुत्वा शोकवेगान्धो दिवि धावन्कमपि वैमानिकमलङ्घयम् । सोऽपि कोपावेशान्मामशपत् । तपोबलगर्वित, उद्दामप्रचारिणा त्वयाऽश्वेनेव यदहं लङ्घितस्तस्मादश्वो भवेति । मया प्रणिपत्योक्तम् । भगवन्सुहृच्छोकान्धचेतसा मयैवमपराद्धं न दर्पात् तत्क्रोधं संहरेति । सोऽभाषत । मम शापो नान्यथा भविष्यति । उज्जयिन्यां पुत्रार्थं तपस्यतस्तारापीडस्य पुत्रत्वं चन्द्रमा यास्यति पुण्डरीकश्च तन्मन्त्रिणः शुकनासस्य । भवानपि तारापीडसूनोर्वाहनतां प्राप्य तस्यैवावसाने स्नात्वा विगतशापो भविष्यतीति । ततोऽहं दिवोऽर्णवेऽपतं तस्माच्च तुरङ्गीभूयोदतिष्ठम् । अश्वभावेऽपि मे पूर्वजन्मस्मृतिर्न नष्टा येन मयैव चन्द्रापीडः किन्नरमिथुनानुसरणक्रमेणेहानीतः । तदेवं चन्द्रापीडश्चन्द्रमसोऽवतारः । योऽसौ प्राक्तनादेवानुरागसंस्काराद्भवतीमभिलषन्नज्ञानाद्भवत्या शप्तः सोऽपि वैशम्पायनः प्रियवयस्यो मे पुण्डरीकः । भगवते श्वेतकेतवे सर्वं निवेदयितुं तयोश्च द्वितीयजन्मग्रहणं कुत्र जातं तद्वेदितुं गच्छा-

मीति। कपिञ्जलवचनाद्वैशम्पायनविग्रहं पुण्डरीकं परिज्ञाय महाश्वेता विललाप। द्वितीयेऽपि जन्मन्यहमस्य मृत्यवे जाता यतो मदनुरक्तोऽसौ मया शप्त इति। कपिञ्जलो रुदतीं महाश्वेतामब्रवीत्। अल्पेनैव कालेन पुण्डरीकेण समेष्यसि कादम्बर्यपि मधुरैश्चन्द्रापीडभाषितैर्मोदयिष्यत इति। कादम्बर्या पत्रलेखामन्तरेण पृष्टः कपिञ्जलस्तद्गतिमहं न जानामीति प्रत्युवाच। ततः कपिञ्जलो व्योमोदपतत्। अपरेद्युः कादम्बरी स्फीतस्फटिकोपलवेदिकायां चन्द्रापीडस्य देहं स्थापयित्वा जलेनाभिषिच्य चन्दनेनानुलिप्य देवतोचितामपचितिं व्यदधात्। यदि सत्योऽयमाश्वासस्तदा सर्वं साध्वेवान्यथा चेन्मरणं मम न दूरमित्यन्तर्निश्चित्य महाश्वेतां जगाद। इदानीं सखीति त्वां व्याहरन्ती न त्रपे विधिनाऽऽवयोः समानसुखदुःखता विहितेति। ततः प्रभृति सा प्रतिदिनं चन्द्रापीडमूर्तिमपूजयत्। गच्छत्सु दिवसेषु चन्द्रापीडस्य निर्विकारं शरीरं दृष्ट्वा स्थिरामाशां बबन्ध। ततो बलाहकं सेनान्यमाहूयाभाषत। विदितस्तव सर्वो वृत्तान्तः। प्रभुमाश्वासयितुमुज्जयिनीं गन्तुमर्हसीति। सोऽब्रवीत्। देवी देवमुत्सृज्य स्वयं गन्तुं नैव शक्नोमि। अन्यं प्रेषयामीति। ततस्तेन त्वरितको नामासन्नपरिचारकश्चन्द्रापीडस्य स्वहस्तलिखिताक्षरं लेखं दत्त्वा प्रहितः। स गत्वा सर्वं राज्ञे न्यवेदयत्। राजा तारापीडस्तनयहृद्भङ्गश्रुतिव्यामूढचेतन उत्तरस्मिन्वृत्तान्ते न प्रत्ययमकरोत्। शुकनासस्तु तं प्रोवाच। देव, कर्मवैचित्र्यवेदिनः श्रुतेतिहासशास्त्रस्य कोऽयं भ्रमः। देवतानामृषीणां च पुराणेषु स्मृतिषु च मर्त्यदेहपरिग्रहः श्रूयते। त्वया देवीमुखे विशंश्चन्द्रमाः स्वप्ने दृष्टः, मया च पुण्डरीकाङ्का गृहिणी समदृश्यत। त्वरितको मिथ्या ब्रूया-

द्वलाहको वा किं मृषा लिखेत् । सुपरीक्षितभृत्यस्य नेयं तव शङ्कोचितेति । एवं शुकनासेन बोध्यमानोऽपि राजा धृतिं न लेभे गमने च मतिं बबन्ध । सकलाभिर्बाष्पपूर्णेक्षणाभिर्महिषीभिः सह निजसचिवसमेतो राजाऽच्छोदतीरं जगाम । सर्वे च पौरजानपदास्तमनुजग्मुः । तस्मिन्गते विजनापणवीथिकान्तोज्जयिनी सकललोकमनोऽभिरामे रामे दिवं याते हतसमृद्धिरयोध्येव ददृशे । नृपो गत्वा सुतमवेक्ष्य बहु विलप्य वल्कलधरः संवृत्तोऽद्यापि तथैव तिष्ठतीति ।

इत्युक्त्वा कृतजृम्भिकः क्षणमिव स्थित्वा भगवाञ्जाबालिराचचक्षे । योऽसौ शुकनाससूनुर्महाश्वेतया शप्तो वैशम्पायनः सोऽद्य शुकतां प्राप्त इति । एवमभिधाय विरतवचसि महर्षौ रजनिरपि कथावत्समाप्तिं प्रपेदे ।

एवं जाबालिकथितां कथां शूद्रकायाख्याय शुकः पुनरब्रवीत् । जाबालिमुखान्मम कथां श्रुत्वा बालभावेऽपि प्राग्जन्मचरितस्मृतिर्मामस्पृशत् । श्वेतकेतुसुतो भूत्वा शुकनाससुतोऽभवम् । अधुनाहं पतत्रिणः पुत्रो जातः । जातस्मृतेर्मम सरस्वती प्रावर्तत पूर्वजन्मन्यधीता विद्या महाश्वेतानुरागश्च मामाविशन् । हारीतेन सस्नेहं संवर्धितोऽहं कतिपयैर्दिवसैर्गगनोत्पतनशक्तिमवाप्नवम् । आसीच्च मम मनसि । विहगस्यापि मे जन्म महाश्वेताश्रमोपान्ते यात्विति । एकदा कपिञ्जलः सुहृत्स्नेहपरवशस्तातस्य श्वेतकेतोराज्ञया जाबालेराश्रममागत्य, क्व वैशम्पायनः शुक इति हारीतमपृच्छत् । उत्पन्नप्रत्यभिज्ञानश्चाहमयमस्मीति स्वयमेवोक्तवान् । ततो मां वक्षसि निधाय स चिरमरोदीत् । मयाऽपि रुदताऽसावुक्तः । वयस्य कपिञ्जल, किं रोदिषि । त्वयाऽपि मत्कृते मत्तः कष्टतरा दशानुभूता । क्व ह्येषा

क्व जपाभ्यासः क्व पर्याणं क्व वल्कलम् । क्वोपवीतं क्व वल्गा क्व मुनिर्भवान् क्व तुरङ्गमजन्मेति । कपिञ्जलो मां तातसन्देशमब्रवीत् । भगवान् श्वेतकेतुः समाज्ञापयति । अद्यायुष्कामयागस्त्वदर्थं प्रवर्तितः । यावत्स न समाप्यते तावत्त्वया जाबालेराश्रमान्न कुत्रापि गन्तव्यमिति । यद्यपि त्वदन्तिके स्थातुमिच्छामि तथापि कर्मैकदेशाङ्गतां गतोऽहं तातेन निवारितः, अतो गच्छामीति । इत्याख्याय मां परिष्वज्य कपिञ्जलो गतः । गच्छति कालेऽहं कामेन स्ववशमानीतो गुर्वाज्ञामतिक्रम्य गमनं प्रति धियमकार्षम् । एकदाऽऽश्रमं शून्यं वीक्ष्य सहसोड्डीयोत्तरां दिशं प्रस्थितः । अदूरं गत एव तृषाक्रान्तः पानीयं पीत्वा यावत्तरोः कोटरे निद्रामसेवे तावन्मम शरीरं पाशैर्बद्धम् । सुप्तोत्थितोहं ममाग्रतो मातङ्गयुवानमपश्यम् । तमात्ममोक्षार्थमभ्यर्थये । भद्र सौम्याकृतिस्त्वं न मांसार्थीव दृश्यसे तन्मां मुञ्चेति । सोऽब्रवीत् । पराधीनः खल्वहमत्र । त्वमत्र जाबालेराश्रमे तिष्ठन्नस्माकं स्वामिदुहितुः कर्णगोचरं गतः । तन्नियोगाद्गृहीतोऽसि बन्धे मोक्षे च सैवाधुना ते प्रभवतीति । तं सानुनयं पुनरब्रवम् । त्वं युवासि । स्मरवेदनां जानासि । अहं मुनिः शापादिमामवस्थां प्राप्तः प्रियोत्कण्ठाकृष्टं मां न रोद्धुमर्हसीति । स उवाच । यथा तथा भवतु । अहं त्वां पक्कणमेव नेष्यामीति । अथ मातङ्गकन्यामागतः सोऽब्रवीत् । स्वामिनि, अयमिहानीतः स वैशम्पायनः शुक इति । सा स्नेहबाष्पार्द्रया दृशा मां वीक्ष्य क्षणं वक्षसि धृत्वा मां पञ्जरे न्यक्षिपत् । ततो महता शोकेनाभिभूतोऽहमचिन्तयम् । अहो बत महाकष्टमनुप्रपन्नोऽस्मि यद् ब्राह्मणेन मया चण्डालवेश्मनि कालो नेयः । भवत्वनशनेनैव हतजीवितं त्यक्ष्या-

मीति । सा चण्डालकन्यकोपाहृतफलोदका मां मधुरया गिराऽ-भाषत । फलान्यशान पानीयमुपभुङ्क्ष्व किं मौनमवलम्बसे । आप-त्काले द्विजातीनामपि सर्वान्नानुमतिः शास्त्रेण क्रियते । वत्स मोप-वासं कुर्विति । एवं चण्डालासदृशैस्तस्या वाक्यैर्विस्मयमानोऽचि-न्तयम् । नूनमेषा न चण्डाली । मद्वत्केनापि कर्मणेमां दशां प्राप्ता । मां मातेव स्निग्धया दृशा पश्यति । तस्मादस्या वचनं करोमीति । एवं चिन्तयित्वा भोजनं न्यदधाम् । मयाऽन्वहं प्रार्थ्यमानाऽपि निजं रूपं नाकथयत् । एकदा प्रबुद्ध उषसि सर्वं पक्कणमार्यप्राय-जनावृतमपश्यमात्मानं च नवहेमपञ्जरवर्तिनम् । तत्किमहं चिरं रक्षितोऽनया कस्य हेतोर्वेहानीत इति राजन्नाहं वेद्मीति ।

एवं शुकेन वर्णितां कथामाकर्ण्य राजा शूद्रकः शय्यागृहाद-ङ्गनमाजगाम । तां मातङ्गकन्यकां चानाययत् । सा दिक्षु स्वतेजसा चन्द्रिकां तन्वती जितवल्लकीध्वनिना स्वरेण जगाद । हे रोहि-णीरमण सर्वकलानिकेत तारापते कादम्बर्यां निबद्धभावमात्मान-मनुस्मर । मां श्रियं विद्धि । अहं चास्याविनीतस्य जननी । अय-मपि गुरुशासनं विलङ्घ्य स्मरवशात्प्रयातुकामो योगदृशा पित्रा ज्ञातः । तस्याज्ञयैव गच्छन्तमेनं पाशैर्बद्ध्वा जनसङ्गभीत्या मातङ्गभूमिमा-नीतवत्यस्मि । मुनेरस्य पितुः क्रतुः सिद्धः, त्वमपि तच्छासनात्सं-स्मृतस्वतनुर्विहितः । अधुना युवामिमे शरीरे उज्झित्वा निजेन वपुषा प्रियासङ्गममनुभवतमिति । इत्युच्चैरुक्त्वा दिव्यकान्तिः सा खमुदपतत् । अथ राज्ञः शूद्रकस्य हृदये लब्धावकाशो मदनो जजृम्भे विरहवेदनया निःसञ्ज्ञतां नीतः स प्राणान्मुमोच । विहङ्गमोऽपि विगतासुर्बभूव । शूद्रकस्य तनौ यच्चान्द्रमसं

तेजः कृतास्पदमासीत्तद्देवान्यदेहे संक्रान्तं बभूव । कादम्बर्यो अच्छोदतीरे प्रियस्य तनुमर्चयन्त्या महान्कालोऽगच्छत् । एकदा च वसन्तसमयावतारे सा भर्तुः शरीरं मलयजघनसारहारपुष्पैरलङ्चकार । तन्माण्डितं शरीरं वीक्ष्य मधुसहायस्य कामस्य गोचरं गता सैकाकिनी दिशो विलोक्य कान्तं निर्भरमालिलिङ्ग । चन्द्रापीडं सा कण्ठे जग्राह सोऽपि च जीवितं प्रपेदे । शिलातलं त्यक्त्वा चिरसुप्तोत्थित इव क्षणं जृम्भालसवदनं स्थित्वा लोचने उन्मील्य चन्द्रापीडो मुरजध्वानानिभेन स्वरेण प्रियां बभाषे । यदमुना तव परिरम्भेणायं जनो जीवितमाप्नोत् तत्सुतनु त्वयाऽमृतप्रभवेऽप्सरसां कुले जन्म समर्थितम् । यत्त्वयेयं तनुः संरक्षिता तेन शापो विरामं गतः । सख्या महाश्वेतायाः प्रियं पुण्डरीकं पितृतपोभिरवाप्तदिव्यजीवं कपिञ्जलकरार्पितपाणिपद्मं मन्मण्डलादवतरन्तं पश्य । मयैव सहेन्दुलोकं गता कदाचन पत्रलेखां द्रक्ष्यसि । सा मे चन्द्रलोकगता सहचरी । तदनवाप्तिकृतो मा ते विषादो भूदिति । इदं वचः श्रुत्वा कादम्बरी रोमाञ्चितगात्री पत्युश्चरणयोर्निपत्य महाश्वेतां परिष्वज्य केयूरकमाहूय तारापीडं दिष्टया वर्धयितुं तदाश्रमं तं प्राहिणोत् । तारापीडः परिणतिकृशोऽपि सहान्तःपुरैस्तत्र तूर्णमाजगाम । चन्द्रापीडो निजां मूर्तिं जानन्नपि तारापीडं प्रणनाम ततः शुकनासं सर्वाश्च जननीः । पुण्डरीको मुनिरपि पितरं शुकनासं प्रणम्य मनोरमां विलासवतीं च ववन्दे । ततश्चित्ररथः सार्धं मदिरया हंसश्च गौर्या तत्राजग्मतुः । ततः सुमहान् विवाहमहोत्सवः प्रावर्तत । तस्मिन्नन्योन्यसमागमानन्दिताः सर्वे परां मुदं लेभिरे । चन्द्रापीडः कादम्बर्या सह कादम्बरी महाश्वेतया सह महाश्वेता च पुण्डरीकेण

सह पुण्डरीकश्च कपिञ्जलेन सह महान्तं कालं सर्वाणि सुखान्यन्वभवन् ॥

Kādambarî and Kādambarî-kathâsâra of Abhinanda.

---

## XV.

## PUSHPODBHAVA MEETS HIS PARENTS.

देव, महीसुरोपकारायैव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यं देशं निर्णेतुमशक्नुवन् मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुमगच्छत् । अहमपि देवस्यान्वेषणाय महीमटन्कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम् । मम पुरोभागे दिनमध्यसङ्कुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्योन्मुखो गगनतलान्महारयेण पतन्तं पुरुषं कञ्चिदन्तराल एव दयोपनतहृदयोऽहमवलम्ब्य शनैरवनितले निक्षिप्य दूरापातवीतसञ्ज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेणोद्गतबाष्पलोचनं तं भृगुपतनकारणमपृच्छम् । सोऽपि कररुहैरश्रुकणानपनयन्नभाषत । सौम्य, मगधाधिपामात्यस्य पद्मोद्भवस्यात्मसम्भवो रत्नोद्भवो नामाहम् । वाणिज्यरूपेण कालयवनद्वीपमुपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्यागच्छन्नम्बुधौ तीरस्यानतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथंकथमपि दैवानुकूल्येन तीरभूमिमभिगम्य निजाङ्गनावियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशादरेण षोडश हायनानि कथंचिन्नीत्वा दुःखस्य पारमनवेक्षमाणो गिरिपतनमकार्षमिति । तस्मिन्नेवावसरे

किमपि नारीकूजितमश्रावि न खलु समुचितमिदं यत्सिद्धादिष्टे पति-तनयमिलने विरहमसहिष्णुर्वैश्वानरं विशसीति । तन्निशम्य मनोवि-दितजनकभावं तमवादिषम् । तात भवते विज्ञापनीयानि बहूनि सन्ति । भवतु । पश्चादखिलमाख्यातव्यम् । अधुना नारीकूजितमनु-पेक्षणीयं मया । क्षणमात्रमत्र भवता स्थीयतामिति । तदनु त्वरया किञ्चिदन्तरमगच्छम् । तत्र पुरतो भयङ्करज्वालाकुलहुतभुगवगाहनसा-हसिकां मुकुलिताञ्जलिपुटां वनितां काञ्चिदवलोक्य ससम्भ्रममनलाद-पनीय कूजन्त्या कयापि वृद्धया सह मत्पितुरभ्यर्णमभिगमय्य स्थविराम-वोचम् । वृद्धे, भवत्यौ कुत्रत्ये । कान्तारे निमित्तेन केन दुरवस्थानुभू-यते कथ्यतामिति । सा वृद्धा सगद्गदमवादीत् । पुत्र कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कस्यचिदेषा सुता रत्नोद्भवेन निजकान्तेन सहाग-च्छन्ती जलधौ मग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमव-लम्ब्य दैवयोगेन कूलमुपेताऽऽसन्नप्रसवा कस्यांचिदटव्यामात्मजम-सूत । मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मद्द्वितीया परिभ्रमन्ती षोडशवर्षानन्तरं भर्तृपुत्रयोगो भविष्यतीति सिद्धवाक्य-विश्वासादेकस्मिन्पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुम-क्षमा समुज्वलिते वैश्वानरे शरीरमाहुतीकर्तुमुद्युक्ताऽऽसीदिति । तदा-कर्ण्य वह्निप्रवेशोद्यतां वनितां निजजननीं ज्ञात्वा तामहं दण्डवत्प्रणम्य तस्यै मदुदन्तमखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविक-सिताक्षं जनकमदर्शयम् । पितरौ तौ साभिज्ञानमन्योन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं मामानन्दाश्रुवर्षेणाभिषिच्य गाढमालिङ्ग्य शिरस्युपाघ्राय कस्यांचिन्महीरुहच्छायायामुपाविशताम् । कथं निव-सति महीवल्लभो राजहंस इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं

राजवाहनजननं सकलकुमारावाप्तिं दिग्विजयारम्भं च सकलमभ्यधाम् । ततस्तौ कस्यचिदाश्रमे मुनेरस्थापयम् ॥

Das'a-kumâra–charita.

---

## XVI.

## THE MEETING OF DADHÍCHA AND SARASVATÎ.

अथ स युवा पुरोयायिनां पदातीनां सकाशादुपलभ्य दिव्याकृति तत्कन्यायुगलमुपजातकुतूहलः प्रतूर्णतुरगो दिदृक्षुस्तं लतामण्डपोद्देशमाजगाम । दूरादेव च तुरगादवततार । निवारितपरिजनश्च केनचित् पुरुषेण सह चरणाभ्यामेव सविनयमुपससर्प । कृतोपसङ्ग्रहणौ तौ सावित्री समं सरस्वत्या किसलयासनदानादिना सुकुसुमफलार्घ्यावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह । आसीनयोश्च तयोरासीना नातिचिरमिव स्थित्वा तं द्वितीयं प्रवयसमुद्दिश्याब्रवीत् । आर्य, सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभाषणमशालीनता, विशेषतो वनमृगीमुग्धस्य कुलकुमारीजनस्य । केवलमियमालोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः । प्रथमदर्शने चोपायनमिवोपनयति सज्जनः प्रणयम् । जनयन्ति च विस्मयमतिधीरधियामदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः सृष्ट्यतिशयाः । त्रिभुवनाभिभावि च रूपमिदमस्य महानुभावस्य । तत्कथयागमनेनापुण्यभाक्तमो विजृम्भितविरहव्यथः शून्यतां नीतो देशः क्व वा गन्तव्यम् । कस्य वाऽयमपरोऽनन्यज इव युवा । किंनाम्नः समुद्धततपसः पितुरयममृतवर्षी कौस्तुभम-

णिरिव हरेर्हृदयमाह्लादयति । का चास्य त्रिभुवननमस्या प्रभातसन्ध्येव महतस्तेजसो जननी । कानि वास्य पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि । आर्यपरिज्ञानेऽप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्येति । इत्युक्तवत्यां तस्यां प्रकटितप्रश्रयोऽसौ प्रतिव्याजहार । आयुष्मति, सतां हि प्रियंवदता कुलविद्या । न केवलमाननं हृदयमपि च ते चन्द्रमयमिव सुधाशीकरशीतलैरानन्दयति वचोभिः । दूरे तावदन्योन्यस्यालपनम् । अभिजातैः सह दृशोऽपि मिश्रीभूता महतीं भूमिमारोपयन्ति । श्रूयताम् । अयं खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्वस्त्रितयतिलकस्यादभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य च्यवनस्य बहिर्वृत्ति जीवितं दधीचो नाम तनयः । जननी चास्य जितजगतोऽनेकपार्थिवानुयातस्य शर्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम । तां खलु देवीमन्तर्वत्नीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात्स्वगृहमानाययत् । असूत च सा तत्र देवी दीर्घायुषमेनम् । अनेहसाऽवर्धत तत्रैवायमानन्दितज्ञातिवर्गो बालस्तारकराज इव राजीवलोचनो राजगृहे । भर्तृभवनमागच्छन्त्यामपि दुहितरि नासेचनकदर्शनमिममसुञ्चन्मातामहो मनोविनोदनं नप्तारम् । अशिक्षतायं तत्रैव सर्वा विद्याः सकलाः कलाश्च । कालेन चोपारूढयौवनमिममालोक्याहमिवासावपि च्यवनोऽनुभवतु मुखकमलावलोकनानन्दमस्येति मातामहः कथंकथमप्येनं पितुरन्तिकं व्यसर्जयत् । मामपि तस्य देवस्य सुगृहीतनाम्नः शर्यातस्याज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु भवती । पितुः पादमूलमायान्तं मया साभिसारमकरोत्स्वामी । तद्धि नः कुलक्रमागतं राजकुलम् । उत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्रमपि

मन्दाक्षम् । अक्षीणः खलु दाक्षिण्यकोशो महताम् । इतश्च गव्यूतिमात्रमिव पारेशोणं तस्य भगवतश्च्यवनस्य स्वनाम्ना निर्मितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं काननं निवासः । तदवधिश्चेयं नौ यात्रा । यदि च गृहीतक्षणं दाक्षिण्यमनवहेलं वा हृदयमस्माकमुपरि, भूमिर्वा प्रसादानामयं जनः श्रवणार्हो वा, ततो न विमाननीयोऽयं नः प्रथमः प्रणयः कुतूहलस्य । वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः । नेयमाकृतिर्दिव्यतां व्यभिचरति । गोत्रनामनी तु श्रोतुमभिलषति नौ हृदयम् । तत्कथय कतमो वंशः स्पृहणीयतां जन्मना नीतः । का चेयमत्रभवती भवत्याः समीप इति । सा त्ववादीत् । आर्य, श्रोष्यसि कालेन । भूयसो दिवसानत्र स्थातुमभिलषति नौ हृदयम् । अल्पीयांश्चायमध्वा । परिचय एव प्रकटीकरिष्यति । आर्येण न विस्मर्तव्योऽयमनुषङ्गदृष्टो जन इति । एवमभिधाय तूष्णीमभूत् । दधीचस्तु नवाम्भोभरगम्भीराम्भोधरध्वाननिभया भारत्या नर्तयन्वनलताभवनभाजो भुजगभुजः सुधीरमुवाच । आर्य करिष्यति प्रसादमार्याऽऽराध्यमाना । पश्यामस्तावत्तातम् । उत्तिष्ठ व्रजाम इति । तथेति च तेनाभ्यनुज्ञातः शनकैरुत्थाय कृतनमस्कृतिरुच्चचाल । तुरगारूढं च तं प्रयान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत् । उत्तीर्य शोणमचिरेणैव कालेन दधीचः पितुराश्रमपदं जगाम । गते च तस्मिन्सा तामेव दिशमालोकयन्ती सुचिरमतिष्ठत् । कृच्छ्रादिव सञ्जहार दृशम् ॥

Harsha-charita.

---

## XVII.
## THE MEETING OF BHAIRAVA'CHA'RYA AND KING PUSHPABHÛTI.

भैरवाचार्यस्तु दूरादेव राजानं दृष्ट्वा शशिनमिव जलनिधिश्चचाल। प्रथमतरोत्थितशिष्यलोकश्चोत्थाय प्रत्युज्जगाम समर्पितश्रीफलोपायनश्च जह्नुकर्णसमुद्गीर्यमाणगङ्गाप्रवाहह्लादगम्भीरया गिरा स्वस्तिशब्दमकरोत्।

नरपतिरपि प्रीतिविस्तार्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीकवनानि दूरावनतः प्रणामं चकार। आचार्योऽपि 'आगच्छ, अत्रोपविश' इति शार्दूलचर्मात्मीयमदर्शयत्। उपदर्शितप्रश्रयस्तु राजा मत्तहंसकलगद्गदस्वरसुभगां मधुरसमयीं महानदीमिव प्रवर्तयन्वाचं व्याजहार। भगवन्, नार्हसि मामन्यनृपस्खलितैः खलीकर्तुम्। अभूमिरयं जन उपचाराणाम्। अलमतियन्त्रणया। दूरस्थितोऽपि मनोरथशिष्योऽयं जनो भवताम्। माननीयं च गुरुवन्नोल्लङ्घनमर्हति गुरोरासनम्। आसतां च भवन्त एवात्रेति। व्याहृत्यैवं परिजनोपनीते वाससि निषसाद। भैरवाचार्योऽपि प्रीत्यानतिक्रमणीयं नृपवचनमनुवर्तमानः पूर्ववत्तदेव व्याघ्राजिनमभजत्।

आसीने च सराजके परिजने शिष्यजने च समुचितमर्घ्यादिकं चक्रे। क्रमेण च नृपमाधुर्यहृतान्तःकरणः शशिकरनिकरविमला दशनदीधितीः स्फुरतीर्दर्शयन्नुवाच। तात, अतिनम्रतैव ते कथयति गुणानां गौरवम्। सकलसम्पत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। जन्मनः प्रभृत्यदत्तदृष्टिरस्मि स्वापतेयेषु। दुर्गृहीतानि कतिचिद्विद्यन्ते विद्याक्षराणि। भगवच्छिवभट्टारकपादसेवया समुपार्जिता

क्रियत्यपि सन्निहिता पुण्यकणिका । स्वीक्रियतां यदत्रोपयोगार्हम् । प्रतनुगुणग्राह्याणि कुसुमानीव हि भवन्ति सतां मनांसीति ।

राजा तु तं प्रत्यवादीत् । भगवन्, युष्मद्दर्शनादुपार्जितमेव चापरिमितं कुशलजातम् । अनेनैवागमनेन स्पृहणीयं पदमारोपितोऽस्मि गुरुणेति विविधाभिश्च कथाभिश्चिरं स्थित्वा गृहमगात् ॥

Harsha–charita.

---

## XVIII.

## THE BIRTH OF HARSHAVARDHANA.

ततश्च प्राप्ते ज्येष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारुरुक्षति क्षपायौवने सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य । निर्गत्य च ससम्भ्रमं यशोवत्याः स्वयमेव हृदयनिर्विशेषा धात्र्याः सुता सुयात्रेति नाम्ना राज्ञः पादयोर्निपत्य देव दिष्ट्या वर्धसे द्वितीयसुतजन्मनेति व्याहरन्ती पूर्णपात्रं जहार ।

अस्मिन्नेव च काले राज्ञः परमसंमतः शतशः संवादितातीन्द्रियादेशो दर्शितप्रभावः सङ्कलिती ज्योतिषि सर्वासां ग्रहसंहितानां पारदृश्वा सकलगणकमध्ये महितो हितश्च त्रिकालज्ञानभाक्तारको नाम गणकः समुपसृत्य विज्ञापितवान् । देव श्रूयताम् । मान्धाता किलैवंविधे व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि सर्वेषूच्चस्थानस्थितेष्वेवं ग्रहेष्वीदृशि लग्ने भेजे जन्म । अर्वाक्ततोऽस्मिन्नन्तराले पुनरेवंविधे योगे चक्रवर्तिजनने नाजनि जगति कश्चिदपरः । सप्तानां चक्रवर्तिनामग्रणीश्चक्रवर्तिचिह्नानां महारत्नानां च भाजनं सप्तानां सागराणां पालयिता सप्ततन्तूनां सर्वेषां प्रवर्तयिता सप्तसप्तिसमः सुतोऽयं देवस्य जात इति ।

अत्रान्तरे स्वयमेवानाध्माता अपि तारमधुरं शङ्खा विरेसुः । अताडितोऽपि क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्जाभिषेकदुन्दुभिः । अनाहतान्यपि मङ्गलतूर्याणि रेणुः । सर्वभुवनाभयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्यप्रतिशब्दः । विधूतकेसरसटाश्च साटोपगृहीतहरितदूर्वापल्लवकवलप्रशस्तैर्मुखपुटैः समहेषन्त हृष्टा वाजिनः । सलीलमुत्क्षिप्तैर्हस्तपल्लवैर्नृत्यन्त इव श्रवणसुभगं जगर्जुर्गजाः । ववौ चाचिराच्चक्रायुधमुत्सृजन्त्या लक्ष्म्या निश्वास इव सुरामोदसुरभिर्दिव्यानिलः । यज्वनां मन्दिरेषु प्रदक्षिणाशिखाकलापकथितकल्याणागमाः प्रजज्वलुरनिन्धना वैतानवह्नयः । तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः । साक्षाद्धर्म इव शान्त्युदकफलहस्तस्तस्थौ पुरः पुरोधाः । पुरातन्यः स्थितय इवादृश्यन्तागता बान्धववृद्धाः । प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि नश्यतः कलिकालस्य बान्धवकुलानीवाकुलान्यधावन्त मुक्तानि बन्धनवृन्दानि । प्रावर्तत च विगतराजकुलस्थितिरधःकृतप्रतीहाराकृतिरपनीतवेत्रिवेत्रो निर्दोषान्तःपुरप्रवेशः समस्वामिपरिजनो निर्विशेषबालवृद्धः समानशिष्टाशिष्टजनः प्रनृत्तसकलकटकलोकः पुत्रजन्मोत्सवो महान् ॥

Harsha-charita.

---

## XIX

## THE STORY OF NÂBHÂNEDISHṬHA.

नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् । सोऽब्रवीदेत्य किं मह्यमभाक्तेति । एतमेव निष्ठावमववदितारमित्यब्रुवन् । तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते । स पित-

रमेत्याब्रवीत् त्वां ह वाव मह्यं तताभाक्षुरिति । तं पिताऽब्रवीत् । मा पुत्रक तदादृथाः । अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते । ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति । तानेते सूक्ते[1] षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति । तथेति तानुपैत्प्रतिगृभ्णीतं मानवं सुमेधस इति । तमब्रुवन् किंकामो वद-सीति । इदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्वा एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेति । तथेति । तानेते सूक्ते षष्ठेऽ-हन्यशंसयत् । ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् । तद्य-देते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै। तं स्वर्यन्तोऽब्रुवन् । एतत्ते ब्राह्मण सहस्रमिति । तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तु-हमिति । सोऽब्रवीन्मह्यं वा इदमदुरिति । तमब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति । स पितरमैत् । तं पिताऽब्रवीत् । ननु ते पुत्रका-दुरिति । अदुरेव म इत्यब्रवीत्तत्तु पुरुषः कृष्णशवास्युत्तरत उपोद-तिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति । तं पिताब्रवीत् । तस्यैव पुत्रक तत्तुभ्यं दास्यतीति । स पुनरेत्याब्रवीत्तव ह वाव किल भगव इदमिति मे पिताहेति । सोऽब्रवीत् । तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति । तस्मादेवं विदुषा सत्यमेव वदितव्यम् ॥

Aitareya Bráhmaṇa V. 14.

---

1 Rigveda X. 61-62. 2. This is a Vedic form corresponding to प्रतिगृह्णीत.

# XX.

# S'AṄKARA'CHA'RYA'S INTRODUCTION TO HIS GI'TA'BHAS'HYA.

भगवान् विष्णुः सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानः । दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन किल सम्बभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

स च भगवाञ्ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वन्निव लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम् । तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थ-

त्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं सङ्क्षेपतो विवरणं करिष्यामि ।

तस्यास्य गीताशास्त्रस्य सङ्क्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञान-निष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम् 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनुगीतासु । तत्रैव चोक्तम्—'नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी । यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन्' ॥ इति । इहापि चान्त उक्त-मर्जुनाय सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स देवादिस्थान-प्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फला-भिसन्धिविवर्जितः । शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा चेममे-वार्थमभिसन्धाय वक्ष्यति योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशु-द्धय इति ॥

---

## XXI.
## THE AUTHORITATIVENESS OF SMRITIS, ITIHA'SAS, PURA'NAS &c.

सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः । तत्र यावद्धर्ममो-क्षसम्बन्धि तद्वेदप्रभवम् । यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वक-मिति विवेक्तव्यम् । एषैवेतिहासपुराणयोरप्युपदेशवाक्यानां गतिः । यत्तु पृथिवीविभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किंचिद्दर्शनपूर्वकं किंचिद्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मणक्षत्रि-

यजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्धयर्थं दर्शनगणितसम्प्रदायानुमानपूर्वकम् । भाविकथनमपि त्वनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम् । अङ्गविद्यानामपि क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् । तत्र शिक्षायां तावद्वर्णकरणस्वरकालादिप्रविभागकथनं तत्प्रत्यक्षपूर्वकम् । यत्तु तथा विज्ञानात्प्रयोगे फलविशेषस्मरणं तद्वेदमूलम् । एवं कल्पसूत्रेष्वपि । व्याकरणेऽपि शब्दापशब्दविभागज्ञानं साक्षाद्वृक्षादिविभागवत्प्रत्यक्षनिमित्तम् । साधुशब्दप्रयोगात्फलसिद्धिः, अपशब्देन तु फलवैगुण्यं भवतीति वैदिकम् । छन्दोविचित्यामपि गायत्र्यादिविवेको लोकवेदयोः पूर्ववदेव प्रत्यक्षः । तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम् । ज्योतिःशास्त्रेऽपि युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञानमविच्छिन्नसम्प्रदायगणितानुमानमूलम्, ग्रहसौस्थ्यदौःस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचनं तद्गतशान्त्यादिविधानद्वारेण वेदमूलम् । एतेन सामुद्रवास्तुविद्यादि व्याख्यातम् । मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता । याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीतास्ताः सर्वा मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः । प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम् । सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदर्शनार्थम् । सर्वत्र च यत्र कालान्तरफलत्वादिदानीमनुभवासम्भवस्तत्र श्रुतिमूलता ॥

Tantravártika

---

# SECOND PART.

## I.

## THE STORY OF EKALAVYA.

अर्जुनस्य धनुर्वेदे परमं प्रावीण्यं वीक्ष्याचार्यो द्रोणः परां प्रीतिं गतस्तमुवाच । प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरस्त्वत्समो लोके भविता । सत्यमेतद्ब्रवीमीति । द्रोणस्य कौशलं श्रुत्वा धनुर्वेदजिघृक्षवो राजानो राजपुत्राश्च सहस्रशः समाजग्मुः । ततो निषादराजस्य हिरण्यधनुषः सुत एकलव्यो द्रोणमभ्याजगाम । निषादोऽयमिति मत्वा द्रोणोऽर्जुनादीनामवेक्षया तमेकलव्यं नैव प्रतिजग्राह । द्रोण उवाच । एकलव्य मम शिष्योऽसि शरप्रयोगे च बलवत्तरः । गृहानेव निवर्तस्वेति । एवमुक्त एकलव्यो द्रोणस्य पादौ शिरसि कृत्वा वनमनुसम्प्राप्य द्रोणस्य मृण्मयीं प्रतिमां व्यदधात् तस्यां चाचार्यवृत्तिमकल्पयत् । तां मूर्तिं सदैव पूजयित्वा परया श्रद्धयोपेतो विमोक्षादानसन्धाने परं लघुत्वमाप । एकदा द्रोणेनाभ्यनुज्ञाताः कौरवपाण्डवा मृगयां कर्तुं निर्गताः । कश्चित्पुरुषः श्वानमादाय पाण्डवाननुजगाम । स श्वा चरन्नितस्ततो मलदिग्धाङ्गं कृष्णाजिनजटाधरमेकलव्यं समालक्ष्य तदन्तिके भषंस्तस्थौ । तदा भषतस्तस्य शुनो मुखे स्वस्यास्त्रविद्यायां लाघवं दर्शयन्सप्त शरान्युगपद् मुमोच । स श्वा शरपूर्णास्यः पाण्डवानाजगाम । तं दृष्ट्वा परं विस्मयमापन्नास्ते वनेऽन्विष्यानिशं शरानस्यन्तमेकलव्यं ददृशुः । विकृतदर्शनं तं नाभ्यजानन्को भवानिति च पर्यपृच्छन् । एकलव्य उवाच । निषादाधिपतेः सुतं धनुर्वेदकृतश्रमं द्रोणशिष्यं मां वित्तेति । पाण्डवा वने वृत्तं सर्वं द्रोणायाचख्युः । अर्जुनस्तु रहो

द्रोणं समासाद्य प्रणयादब्रवीत् । अहं भवता पूर्वमुक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यतीति । अथ कस्मान्मद्विशिष्टो लोकादपि च बलीयान्निषादाधिपतेः सुतो भवतः शिष्योऽस्तीति । द्रोणो मुहूर्तं चिन्तयित्वाऽर्जुनमादायैकलव्यं गतः । जटिलं चीरवाससं धनुष्पाणिमनिशं शरानस्यन्तमेकलव्यं ददर्श । एकलव्यस्तु द्रोणमायान्तमवलोक्य प्रत्युद्गम्य शिरसा प्रणम्यात्मानं शिष्यं निवेद्य द्रोणस्याग्रतः प्राञ्जलिस्तस्थौ । द्रोण एकलव्यमुवाच । यदि मे शिष्योऽसि वेतनं दीयतामिति । एकलव्यः प्रत्यवदत् । किं प्रयच्छामि । भवानाज्ञापयतु । न हि किञ्चिद्गुरवेऽदेयं ममेति । द्रोणस्तमब्रवीत् । दक्षिणोऽङ्गुष्ठो दीयतामिति । द्रोणस्य दारुणं वचः श्रुत्वाऽऽत्मनः प्रतिज्ञां रक्षन्सत्यवादी निषादाधिपतेः सुतोऽदीनमानसोऽङ्गुष्ठं छित्त्वा द्रोणाय प्राददात् । ततो शरमेकलव्योऽङ्गुलीभिरेव व्यकर्षत् । न च तथा शीघ्रोऽभवद्यथा पूर्वमासीत् । ततोऽर्जुनः प्रीतमना बभूव । एवं द्रोणः प्रियशिष्यमर्जुनमतुलं धनुर्धरं विहितवान् ॥

Mahâbhârata–Âdiparva.

---

## II.

## A KING'S SELF-SACRIFICE.

एकदा श्येनेन प्रपात्यमानः प्रियदर्शनः कपोतो वृषदर्भं नाम नरेन्द्रं शरणमगच्छत् । स महात्मा त्रासादङ्कमुपागतं तं दृष्ट्वाऽवदत् । वत्स, आश्वसिहि, सुमहदेतद्भयं कस्मात्तव सञ्जातम् । त्वया कुत्र किं कृतं येन त्वं भ्रान्तचेतन इह सम्प्राप्तः । नवनीलोत्पलापीडवर्ण सुदर्शन कपोत मा बिभीहि । मत्सकाशमनुप्राप्तं त्वां न

काश्चिदपि ग्रहीतुं शक्नुयात् । त्वदर्थे काशिराज्यं जीवितमपि वा त्यजेयम् । तस्माद्विस्रब्धो भव न ते किञ्चन भयं विद्यत इति । तदा श्येन आगत्य राजानमुवाच । राजन्, मम भक्ष्यत्वेन विहितमेनं न त्वं त्रातुमर्हसि । तृष्णा मां बाधते क्षुधा च मां निर्दहतीव । तस्मादेनं मुञ्च क्षुधां मन्दयितुं न शक्ष्यामि । यदि स्वविषये नृणां रक्षणे त्वं प्रभुस्तथापि तृषार्तस्य खेचरस्य न त्वं प्रभुः । यदि त्वं धर्मार्थी कपोतं शरणागतं रक्षसि तर्हि क्षुधार्तं मामपि द्रष्टुमर्हसीति । राजा प्रत्युवाच । क्षुधाप्रशमाय त्वदर्थं वराहं वा मृगं वा महिषं वोपकल्पयामि । शरणागतं न त्यजेयमिति मे व्रतम् । पश्यायं कपोतो ममाङ्गानि भयान्न मुञ्चतीति । श्येन उवाच । न वराहं न चाप्यन्यं कञ्चन प्राणिनं भक्षयामि । श्येनाः कपोतान्खादन्तीति सनातनी स्थितिरेषा । यदि कपोते महांस्तव स्नेहस्तर्हि तस्य तुलया धृतं स्वमांसं मह्यं प्रयच्छेति । राजा प्रत्यभाषत । महानेषोऽनुग्रहो यत्त्वमेवमात्थ । तव वचनं करिष्यामीति । एवमुक्त्वा स राजा स्वमांसान्युत्कृत्योत्कृत्य तुलया समतोलयत् । राज्ञाऽऽरब्धं दारुणं कर्म श्रुत्वा तस्यान्तःपुरात् स्त्रियो हाहानिनादेन दिशो बधिरयन्त्यो विनिष्क्रान्ताः । मन्त्रिभृत्यजनस्य तासां च रुदितेन सर्वं गगनं निरुद्धम् । स राजा पार्श्वतो बाहुभ्यामूरुभ्यां च मांसानि संच्छिद्य तुलामपूरयत् । तथापि तन्मांसं कपोतेन तुल्यं न बभूव । यदा निर्मांसो रुधिराप्लुतो राजाऽस्थिमात्रावशेषीभूतस्तदा मृत्युमाप तन्मांसं च कपोतसमानमानं बभूव । तदा देवदुन्दुभयो नेदुः । दिव्यैर्माल्यैरभिवृष्टोऽमृतेन चावसिक्तो राजा विमानमधिष्ठाय स्वर्गं गतः ।

भक्तानामनुरक्तानामाश्रितानां च रक्षिता सर्वभूतेषु च दयावान् परत्र सुखं लभते ॥

Mahâbhârata–Anuśâsanaparva 32.

---

III.

## THE STORY OF SUNDA AND UPASUNDA.

महासुरस्य हिरण्यकशिपोरन्ववाये निकुम्भो नाम बलवान् दैत्येन्द्रोऽभवत् । तस्य सुन्दोपसुन्दनामानौ द्वौ महावीर्यौ भीमपराक्रमौ पुत्रौ जातौ । तौ निरन्तरमेकनिश्चयौ समदुःखसुखाववर्तेताम् । विनाऽन्योन्यं नैव भुञ्जाते स्म विनाऽन्योन्यं नैवाजल्पताम् । तौ त्रैलोक्यविजये निश्चयं कृत्वा विन्ध्यं गत्वोग्रं तपस्तेपतुः । दीर्घेण कालेन जटावल्कलधारिणौ मलोपचितसर्वाङ्गौ वायुभक्षावूर्ध्वबाहू अनिमिषौ तपसः परां काष्ठां गतौ । ततो देवास्तयोरुग्रं तपो दृष्ट्वा भीतास्तपोविघाताय विघ्नानुत्पाद्य रत्नैः स्त्रीभिश्च तौ प्रलोभयामासुः । तथापि तौ व्रतस्य भङ्गं नैव चक्रतुः । ततो भगवान्स्वयंभूश्चतुराननः प्रादुर्भूय वरं वरयतमिति तौ भ्रातरावुवाच । पितामहं देवं दृष्ट्वा तौ प्राञ्जली तस्थतुरूचतुश्च । भगवन्, यद्यावयोस्तपसा प्रीतोऽसि तर्हि मायाविदौ बलिनौ कामरूपिणावस्त्रविदावमरौ स्यावेति । ब्रह्मा बभाषे । ऋतेऽमरत्वाद् यद्युवाभ्यामुक्तं तत्सर्वं भविष्यति । त्रैलोक्यविजयाय भवद्भ्यां तप आस्थितं तस्माद्युवयोः कामं न करोमि । अन्यद्वृणुतमिति । सुन्दोपसुन्दावूचतुः । त्रिषु लोकेषु यत्किञ्चित्स्थावरजङ्गमं भूतं सर्वस्मात्तस्मान्नो भयं न स्यादृतेऽन्योन्यस्मादिति । तथास्त्विति ब्रह्मा प्रोवाच ब्रह्मलोकं च जगाम । ततस्तौ भ्रातरौ स्वं भवनं गत्वा महा-

र्हाभरणोपेतौ विरजोऽम्बरधारिणौ बभूवतुः । प्रमुदितैः सुहृज्जनैः सह क्रीडन्तौ प्रभूताः समा एकं दिनमिव निन्यतुः । वरलाभेनोन्मत्ताभ्यां ताभ्यामिन्द्रादयो देवा विजिग्यिरे । यतीनामाश्रमा उत्सादयांचक्रिरे द्विजास्तपोधनाश्च प्रसभं हताः । तयोर्नृशंसैः कर्मभिर्निवृत्तयज्ञस्वाध्याया विनष्टनृपतिद्विजा विध्वस्तनगराश्रमा कङ्कालसङ्कीर्णा भूर्बभूव । तौ दैत्यौ सर्वा दिशो विजित्य निःसपत्नौ भूत्वा कुरुक्षेत्रे निवेशं चक्रतुः । ततः सर्वे सिद्धाः परमर्षयो देवाश्च पितामहस्य भवनं गत्वा तस्मै सुन्दोपसुन्दयोः सर्वमेव कर्म न्यवेदयन् । दीनानां तेषां वचो निशम्य मुहूर्तं सञ्चिन्त्य सुन्दोपसुन्दयोर्वधे मतिं बबन्ध विश्वकर्माणं चाह्वयत् । आगतं विश्वकर्माणं ब्रह्मा व्यादिदेश सृज्यतां रामणीयकनिधिः प्रमदैकेति । तथास्त्वित्युक्त्वा पितामहं नमस्कृत्य विश्वकर्मा त्रिषु लोकेषु स्थावरजङ्गमेषु भूतेषु यत्किञ्चिद्दर्शनीयमुपलेभे तत्समानीय दिव्यां योषितं निर्ममे । रत्नानां तिलं तिलं समानीय यत्सा निर्मिता तस्मात्पितामहस्तिलोत्तमेति तस्या नाम चक्रे । तिलोत्तमा ब्रह्माणं नमस्कृत्य प्राञ्जलिरब्रवीद्भगवन्कार्यमादिशेति । परमेष्ठी प्रोवाच । तिलोत्तमे सुन्दोपसुन्दौ गत्वा स्वीयेन प्रार्थनीयतमेन रूपेण तौ प्रलोभ्य तथा कुरु यथाऽन्योन्यं विरोधं गमिष्यत इति । तथेति प्रतिज्ञाय पितामहं नमस्कृत्य तिलोत्तमा गता । पृथ्वीं जित्वा निरुद्योगौ तौ दैत्यौ यथाकामं विजह्रुः स्त्रीभिर्माल्यैर्गन्धैर्भोज्यैर्विविधैर्हृद्यैरासवैश्च परां प्रीतिमवापतुः । एकदा विन्ध्यस्य समशिलातले प्रस्थे पुष्पिताग्राणां सालानां मध्ये तौ निषेदतुः । ततो वादित्रनृत्ताभ्यां स्त्रियस्तावुपातिष्ठन् गीतैश्च तौ मुदितमानसौ बभूवतुः । ततस्तिलोत्तमा नदीतीरे कर्णिकारपुष्पाणि विचिन्वती यत्र तौ महासुरावास्तां तं प्रदे-

शमाजगाम । आसवमदेनारक्तनयनौ तौ तां चारुसर्वाङ्गीं दृष्ट्वा मदनपरवशौ जज्ञाते । आसनं विहाय सुन्दस्तिलोत्तमां दक्षिणे करे जग्राहोपसुन्दोऽपि वामे करे । सुन्दोऽभाषत ममेयं भार्या तव पूज्येति । उपसुन्दो व्याजहार मम भार्येयं तव स्नुषेति । नैषा तव ममैवेति तावुभौ विवादं कृत्वा तस्या रूपेण मोहितौ विगतसौहार्दौ तस्याः कृते गदायुद्धमारेभाते परस्परं गदाप्रहारैश्चूर्णिताङ्गौ रुधिरदिग्धशरीरौ तौ धरणीतले पेततुः । एवं तिलोत्तमया सुन्दोपसुन्दविनाशेन देवकार्यं साधितम् । प्रीतो लोकेशस्तस्यै वरं ददौ ॥

Mahâbhârata–Âdiparva.

## IV.

## THE STORY OF DHRUVA, SON OF UTTA'NAPA'DA.

स्वायंभुवस्य मनोः प्रियव्रतोत्तानपादनामानौ द्वौ सुतावास्ताम् । उत्तानपादस्य द्वे भार्ये बभूवतुः । अभीष्टायां सुरुच्यामुत्तमो नाम तस्यात्यन्तवल्लभः पुत्रो जज्ञे । सुनीत्यां नामापरस्यां राज्ञ्यां ध्रुवो नाम तनयः सम्भूतः । एकदा राजासनास्थितस्य पितुरङ्कमाश्रितं भ्रातरमुत्तमं दृष्ट्वा ध्रुवोऽपि तमारोढुं मतिं चक्रे । भूपतिस्तु प्रेयस्याः सुरुच्याः समक्षं प्रणयेनागतमुत्सङ्गारोहणोत्सुकं पुत्रं नाभ्यनन्दत् । अङ्कारोहणोत्सुकं ध्रुवं दृष्ट्वा सुरुचिस्तमुवाच । वत्स, एष महान्मनोरथः किं क्रियते । एतद्राजासनं ममैव पुत्रस्य योग्यं किमात्मा क्लिश्यते त्वया । सत्यं त्वमस्य राज्ञः सुतोऽसि न पुनर्मदुदराज्जात इति । तद्वचनं श्रुत्वा बालः पितरमुत्सृज्य कुपितो मातुर्मन्दिरं ज-

गाम । पुत्रं कुपितमीषत्स्फुरिताधरं दृष्ट्वा सुनीतिरङ्कमारोप्य तमभाषत। वत्स, कः कोपहेतुस्ते, यस्त्वापराध्यति स किं तव पितरं न जानातीति । इत्युक्तो ध्रुवो मात्रे सर्वं यथावृत्तं कथयामास । सुतवचनं निशम्य दुर्मनायमाना दीना सुनीतिरवदत् । पुत्र, सुरुचिः सत्यमेवाह, त्वं स्वल्पभाग्योऽसि । नैव तात त्वयोद्वेगः कार्यः । राजासनं छत्रं वराश्वाश्च यस्यान्यजन्मकृतानि पुण्यानि तस्यैव भवन्ति । एवं विचार्य शान्तिं व्रज । सुरुच्याः पुत्र उत्तमः पुण्योपचयसम्पन्नो मम पुत्रस्तु भवानल्पपुण्यः सञ्जातः । तथापि दुःखं कर्तुं नार्हसि । यस्य यावद्भाग्यप्राप्तं तेनैव बुद्धिमान् सन्तोषमेति । सुरुच्या वचसा चेदत्यर्थं दुःखितो भवांस्तदा पुण्योपचये यत्नं करोतु । धर्मात्मा प्राणिहिते रतः सुशीलश्च भवेति । ध्रुवः प्रत्यवदत् । अम्ब, मम प्रशमाय यत्त्वयोक्तं तद्दुष्टवचसा भिन्ने मम हृदये नान्तरं लभते । अहं तथा यतिष्ये यथा निखिलस्य जगतः पूजनीयमुत्तमोत्तमं स्थानं प्राप्स्यामि । उत्तमो मम भ्राता पित्रा दत्तं राजासनमाप्नोतु, अहं पुनः स्वकर्मणा शाश्वतं स्थानमिच्छामि यन्मम पिताऽपि न प्रापेति । इत्युक्त्वा मातुर्गृहान्निर्गम्य नगराद्बहिरुपवनं ययौ तत्र पूर्वागतान् सप्तर्षीन्ददर्श । स राजपुत्रस्तान्सर्वान्प्रणिपत्य प्रश्रयावनतोऽभ्यभाषत । भो ऋषयः, मां सुनीत्या जातमुत्तानपादतनयं ध्रुवं निर्वेदाद्युष्माकमन्तिकं प्राप्तं निबोधतेति । ऋषय ऊचुः । वत्स, पञ्चवर्षीयो नृपनन्दनस्त्वं नैव च किञ्चिदुद्वेगकारणं पश्यामः । किंनिमित्तस्ते निर्वेदस्तत्कथ्यतामिति । ततो ध्रुवस्तेभ्यः सर्वं शशंस । तन्निशम्य ऋषयः परस्परं प्रोचुः । अहो क्षात्रं परं तेजो यद्बालस्यापि हृदयात्सपत्न्या मातुरुक्तं नापसर्पतीति । ते ध्रुवमभाषन्त

भोः क्षत्रिय, निर्वेदाद्यत्त्वयाऽधुना कर्तुं व्यवसितं तदस्मभ्यं कथय यच्चास्माभिस्तव साहाय्यं कार्यं तदपि ब्रूहीति । ध्रुवोऽब्रवीत् । नाहं धनं राज्यं वेच्छामि । यत्पुराऽन्येन नैव प्राप्तं तदेवैकं स्थानं कामये । कथमेतादृशं स्थानं प्राप्यते तन्मह्यं कथयन्तु भवन्त इति । मरीच्यादयः सप्तर्षय ऊचुः । अनाराधितगोविन्दैर्नरैः श्रेष्ठं स्थानं न प्राप्यते तस्मादच्युतमाराधयेति । तस्याराधनं मया कथं कर्तव्यमिति ध्रुवेण पृष्टे सप्तर्षय ऊचुः । अखिलान्बाह्यार्थान् विहाय मनो जगद्धाम्नि विष्णौ निश्चलं कुरु । एवमेकाग्रचित्तेन तन्मयेन त्वया, ॐ नमो वासुदेवायेति जप्तव्यमिति । एतन्निशम्य तानृषीन्प्रणम्य ध्रुवस्तस्मादुपवनान्निर्गम्य यमुनातटे मधुवनं गत्वा तपस्तेपे । अनन्यमनसा भगवन्तं हरिं ध्यायतस्तस्य भारमुद्वोढुमक्षमा धरणी चचाल देवाश्च परमं क्षोभं जग्मुः । इन्द्रस्तस्य समाधेर्भङ्गं कर्तुं विविधा माया आविश्चकार । तस्य माता सुनीतिस्तस्य पुरतः स्थिता करुणां वाचमुवाच । पुत्र, अस्माच्छरीरव्ययान्निवर्तस्व, दीनां मां परित्यक्तुं नार्हसि । क्व च त्वं पञ्चवर्षीयः क्व चैतद्दारुणं तपः । अयं तेऽध्ययनस्य क्रीडायाश्च कालः । यद्यद्य तपो न परित्यजासि तर्हि पश्यतस्तवेमान्प्राणानहं त्यक्ष्यामीति । एवमुक्त्वा इन्द्रमायानिर्मिता सुनीतिस्तिरोदधे । ततोऽभ्युद्यतोग्रशस्त्राणि रक्षांस्याविर्बभूवुः शतशश्च शिवा नेदुः । तानि रक्षांसि तत्कृता भीषणा नादाश्च गोविन्दासक्तचित्तस्य तस्य नयनगोचरतां नैव ययुः । सर्वासु मायासु विलीनासु देवा हरिं शरणं जग्मुरूचुश्च । देवदेव जगन्नाथ न विद्मः किं ध्रुवः शक्रत्वं सूर्यत्वं कुबेरत्वं वा वाञ्छति । तस्माद्ध्रुवं तपसो विनिवर्तयेति । भगवानुवाच । ध्रुवो नैव शक्रत्वादिकं प्रार्थयते । यूयं विग-

तच्चिन्ता यात, तस्य काममहं सम्पादयिष्यामीति । भगवान् विष्णुर्ध्रुवस्य तपसा तोषितस्तं गत्वोवाच । वत्स ध्रुव, यद्बाह्यार्थनिरपेक्षं त्वया मयि चित्तमाहितं, तेन तुष्टोऽहम् । वरं वरयेति । इदं भगवतो वचनं निशम्य चक्षुषी उन्मील्य शङ्खचक्रगदाशार्ङ्गवरासिधरं किरीटिनमच्युतमालोक्य शिरसा प्रणनाम जगाद च । देवदेव, यदि मे तपसा भगवान्परमं तोषं गतस्तदा भगवन्तं स्तोतुमिच्छामि । वरमेतं मह्यं प्रयच्छ । ब्रह्माद्यैरपि तव गतिर्न ज्ञायते तदहं बालकस्त्वां स्तोतुं कथं शक्ष्यामीति । ततः प्राञ्जलिं ध्रुवं भगवान्विष्णुः शङ्खप्रान्तेन पस्पर्श । तत्क्षणमेव प्रसन्नवदनो नृपनन्दनो भूतधातारमच्युतं प्रणम्य तुष्टाव । भूमिरापोऽनलो वायुः खं मनो बुद्धिश्च यस्य रूपं तं परमेशं नतोऽस्मि । त्वं सर्वात्मकः सर्वेशश्चासीति । भगवानुवाच । ध्रुव, यत्त्वयाऽहं दृष्टस्तपसस्तत्फलं त्वया प्राप्तम् । मद्दर्शनं तु नैव विफलं जायते । तस्मादभिमतं वरं वरयेति । ध्रुवो व्याजहार । भगवन्, त्वं सर्वभूतानां हृदि तिष्ठसि, यन्ममेप्सितं तत्किं तव परोक्षम् । तथापि दुर्विनीतहृदयेन मया यत्प्रार्थ्यते तत्तुभ्यं कथयिष्यामि । ममोदरादजातस्य तव नैतद्राजासनं योग्यमिति मातुः सपत्नी मां गर्वादवदत् । अतस्त्वत्प्रसादादव्ययं सर्वेषामुत्तमं स्थानमहं प्रार्थय इति । भगवानवदत् । यत्त्वया प्रार्थितं स्थानं तत्त्वं लप्स्यसे । भौमादीनां ग्रहाणां नक्षत्राणां सप्तर्षीणां चाप्युपरि स्थानं मया तुभ्यं दत्तम् । सुनीतिरपि तव माता तारका भूत्वाऽऽकल्पं त्वत्संनिधौ निवत्स्यतीति । एवं ध्रुवो भगवत्प्रसादाद्ध्रुवं स्थानमध्यास्त ॥

Vishṇu-purāṇa I.

## V.

# FOUR RECKLESS BRĀHMAṆAS.

ब्रह्मस्थलाभिधानेऽग्रहारे विष्णुस्वामी नाम द्विजोत्तम आसीत् । तस्य श्रुतिशालिनश्चत्वारस्तनया बभूवुः । मृते पितरि ते मातुलानां निवेशनं गत्वा तैः सावज्ञमीक्ष्यमाणा निर्धना अचिन्तयन् । अहो धिगियं दरिद्रता या मरणादपि कष्टतरामवस्थां नयति जनम् । मांसोपजीविनो गृध्रा नित्यं शवं प्रयान्ति । दारिद्र्यसंस्पृष्टं तु पुरुषं न कोऽपि स्पृशतीति । तेषामेकतमः प्रोवाच । दारिद्र्यदुःखादात्मानं परित्यक्तुमद्याहं भीषणं श्मशानं गतः । ततः केनापि पुरुषेण कारुण्याद्रक्षितोऽहम् । तस्मात् प्राक्तनं कर्माऽभुक्त्वा मरणं कुतः प्राप्यत इति । ततस्ते सर्वे सङ्गमस्थानमुद्दिश्य सङ्केतं कृत्वा देशान्तरं गताः । बहुकौतुकां पृथ्वीं परिभ्रम्य विद्या अवाप्य मिलिताः परस्परमूचिरे । अस्थिसम्पादिनीं विद्यामहं जानामीत्यग्रजोऽवदत् । तन्मांसयोजनज्ञोऽहमित्यपरः प्रोवाच । त्वग्रोमन्यासकुशलोऽस्मीत्यन्योऽब्रवीत् । जीवितार्पणविज्ञाने निपुणोऽहमिति कनिष्ठोऽभिदधे । एवमुक्त्वा विद्याप्रभावं द्रष्टुं सकुतूहलास्तेऽन्विष्यैतस्ततः सिंहस्य जीर्णास्थिसञ्चयमवापुः । यदा सोऽस्थिसञ्चयः समग्रः समांसस्त्वग्रोमनिचितश्च कृतस्तदा चतुर्थः क्रमेण तं सजीवं व्यदधात् । दंष्ट्राकरालवदनः क्षुत्क्षामः पञ्चाननो जातमात्र एव द्विजपुत्रांस्तीक्ष्णैः करजैर्जघान । इमां कथां कथयित्वा वेतालो धरणीपतिं विक्रमं पप्रच्छ । राजन्, ब्रूहि द्विजवधोद्भूतं तत्पातकं कस्येति । इत्थं पृष्टो राजा प्रत्यवदत् । यो मृगेन्द्रमजीवयत्तस्यैव तद्घोरं पातकं नान्यस्येति ॥

Bṛihat-kathā-mañjarī.

## VI.

## THE STORY OF NÂGÂRJUNA.

पुरा चिरायुर्नाम्नि नगरे सर्वसम्पदां केतनं चिरायुर्नाम भूपतिरासीत् । बोधिसत्त्वांशसम्भवो दयालुर्दानशीलो विज्ञानवान्नागार्जुनो नाम तस्य मन्त्री बभूव यः सर्वौषधियुक्तिज्ञः सिद्धरसायनस्तं राजानमात्मानं च विजरौ चिरजीविताकरोत् । कदाचित्तस्य नागार्जुनस्य सर्वेषु पुत्रेषु प्रेष्ठः सुतो बालोऽपि पञ्चत्वमाययौ । शोकसन्तप्तः स मर्त्यानां मृत्युशान्तये तपोदानप्रभावतो द्रव्यैरमृतं स्रष्टुमुपचक्रमे । शिष्टस्यैकस्यैवौषधस्य मेलनाय यावदुचितं कालयोगं प्रत्यैक्षत तावदिन्द्रेण सर्वं तच्चिकीर्षितमबुध्यत । इन्द्रः सुरैर्मन्त्रं कृत्वाऽश्विनावेवमादिशत् । भुवि नागार्जुनं गत्वा मद्वचनादिदं ब्रूतम् । मन्त्रिणाऽपि सता भवता कोऽयमनयः कर्तुमारब्धः । किं त्वं साम्प्रतं प्रजापतिं जेतुमुद्यतः । ये मर्त्यास्तेन मरणधर्माणो निर्मितास्तानमृतं साधयित्वाऽमरान्कर्तुमिच्छसि । एवं कृते देवमनुष्ययोः को विशेषो भवेत्, यष्टृयाजकाभावाच्च जगत्स्थितिर्भज्येत । तस्मादेतदमृतसाधनं संहर नो चेत्कुपिता देवा ध्रुवं शापं दास्यन्ति । यच्छोकादेष यत्नस्त्वया क्रियते स तव सुतः स्वर्गे स्थित इति । एवं सन्दिश्य शक्रोऽश्विनौ प्रजिघाय । तौ समागत्य नागार्जुनात्पूजां लब्ध्वा तस्मै शक्रसन्देशमूचतुः । ततो नागार्जुनो विषण्णः सन्नचिन्तयत् । इन्द्रवाक्यं न करोमि चेदासतां तावद्देवा इमावश्विनावेव किं मे शापं न प्रयच्छतः । तदेषाऽमृतसिद्धिरास्तां, मम पुत्रः सुकृतैरशोच्यां गतिं गत इति । एवमालोच्य नागार्जुनोऽश्विनावब्रूत । इन्द्राज्ञामनुष्ठायामृतक्रियां संहरामि । युवां चेन्नागमिष्यतं तर्हि पञ्चाहेनामृते सिद्धे पृथिवी मयाऽ-

जरामरा कृताऽभविष्यदिति । एवमुक्त्वाऽश्विनोः समक्षमेव नागार्जुनो धरण्यां सिद्धप्रायममृतं निचखान । ततोऽश्विनौ तमापृच्छ्य शक्रं गत्वा तस्मै कृतं कार्यमाचख्यतुः । राजा चिरायुः पुत्रं जीवहरं नाम यौवराज्येऽभ्यषिञ्चत् । अभिषिक्तं तं प्रणामार्थमुपागतं सुतं हृष्टं दृष्ट्वा तन्माता धनपरा नामाब्रवीत् । आयुष्मन्, यौवराज्यं प्राप्य किं मृषा हृष्यसि । तव पितुः पुत्रा बहवो युवराजपदं प्राप्य मृता न च केनापि राज्यं प्राप्तम् । नागार्जुनेन राज्ञे रसायनं दत्तं येनाधुनाष्टौ शतं च वर्षाणि समतीत्यापि स जीवति । कियन्त्यन्यानि वर्षाणि प्राप्स्यतीति को जानाति । यदि राज्येन तेऽर्थस्तर्हि कुरुष्वेममुपायम् । मन्त्री नागार्जुनो विहिताह्निक आहारसमये प्रत्यहमिमामुद्घोषणां करोति कोऽर्थी किं प्रार्थयत इति । स्वशिरो मे प्रयच्छेति तं गत्वा तत्काले ब्रूहि । सत्यवाचि च्छिन्नमूर्ध्नि तस्मिन्मृते नृपस्तच्छोकात्पञ्चतां यायाद्वनं वा समाश्रयेत् । ततस्त्वं राज्यं प्राप्स्यसि नान्य उपायोऽत्रास्तीति । मातुर्वचः श्रुत्वा तथेत्युक्त्वा तस्या वचनं कर्तुं स निश्चिकाय । कष्टं बत राज्यलोभो बान्धवस्नेहमतिवर्तते । अन्येद्युर्जीवहरो भोजनवेलायां नागार्जुनस्य गृहं गत्वा कः किं याचत इति वदन्तं मन्त्रिणं मूर्धानमयाचत । वत्स, आश्चर्यमेतत्, मम शिरसा किं करोषि, एष मांसास्थिकेशसङ्घः क्वोपयुज्यते, तथापि यद्यनेन तवार्थस्तर्हि च्छित्वा शिरो गृहाणेत्युक्त्वा नागार्जुनस्तस्मै शिरोधरामुपानयत् । रसायनदृढायां शिरोधरायां चिरं प्रहरतो राजसूनोर्बहवः खड्गाः खण्डशः कृताः । एतद् बुद्ध्वा चिरायुर्नृपतिरागत्य शिरोदानान्नागार्जुनं यदा न्यवारयत्तदा स महात्माऽब्रवीत् । नृपते जातिस्मरोऽहम्, नवाधिकां नवतिं जन्मानि स्वशिरो मया दत्तम् ।

शिरोदानायेदं मे शततमं जन्म तस्मान्मा स्म वोचः किञ्चित् । न कोऽप्यर्थी मत्तो विमुखो याति । तदिदानीं त्वत्पुत्राय स्वशिरो ददामि । त्वन्मुखालोकनायैव विलम्ब एष कृतो मयेति । एवमुक्त्वा नृपतिमाश्लिष्य कोषतश्चूर्णमादाय तेन राजपुत्रस्य कृपाणं व्यलिपत् । कृपाणप्रहारेण नृपात्मजो नागार्जुनस्य शिरश्चिच्छेद । प्राणत्यागोन्मुखे नृपे गगनादशरीरिणी वागुदचरत् । राजन्, अकार्यं मा कृथा एष ते सखा नागार्जुनोऽशोच्यः संवृत्तो यतोऽयमपुनर्जन्मा बुद्धसमां गतिं प्राप्त इति । एतच्छ्रुत्वा स चिरायुर्नृपो मरणव्यवसायाद्विरम्य शुचा राज्यं त्यक्त्वा वनमाशिश्राय । तपसा परमां गतिं च प्राप । तत्पुत्रो जीवहरो राज्यमधितस्थौ । तथापि पितुर्वधं स्मरद्भिर्नागार्जुनसुतैरचिरेणैव राज्यभेदं विधाय स निहतः । तच्छोकात्तस्य मातुर्धनपराया हृदयमस्फुटत् । **अनार्यजुष्टेन पथा प्रवृत्तानां नराणां कुतः शिवं भवेत् ॥**

Kathâsaritsâgara VII.

---

## VII.

## THE DESCENT OF THE GANGES FROM THE HEAVENS.

पुरा सगरो नाम धर्मात्मा भूपतिरासीत् । तस्य द्वे भार्ये बभूवतुरेका विदर्भराजस्य दुहिता केशिनी नामापरा चारिष्टनेमेर्दुहिता सुपर्णभागिनी सुमतिर्नाम । सह ताभ्यां सगरो हिमवन्तमासाद्य भगुप्रस्रवणे सानौ तपस्तेपे । पूर्णे वर्षशते तपसाऽऽराधितो मुनिर्भृगुः सगराय वरं प्राददात् । एका भार्या वंशवृद्धिकरं पुत्रं जनयिष्यति

षष्टिं च पुत्रसहस्राण्यपरेति । एवं भाषमाणं तं राजपुत्र्यौ प्राञ्जली भूत्वोचतुः । एकः सुतः कस्या भविष्यति का च बहून्पुत्राञ्जनयिष्यतीति । परमधार्मिको भृगुर्बभाषे । अत्र स्वच्छन्दो विधीयतामिति । ततः केशिनी वंशकरं पुत्रं जग्राह सुमतिश्च षष्टिं पुत्रसहस्राणि वव्रे । ऋषिं प्रदक्षिणीकृत्य प्रीतो राजा सगरः सभार्यः स्वपुरं जगाम । गते काले ज्येष्ठा महिषी केशिनी पुत्रमेकं प्रासूतासमञ्ज इति ख्यातम् । सुमतेस्तु षष्टिः पुत्रसहस्राण्यजायन्त । महता कालेन ते सर्वे पुत्रा यौवनपदवीमारूढाः । सगरस्य ज्येष्ठः पुत्रोऽसमञ्जः पौराणां बालान्गृहीत्वा सरय्वा जले प्रक्षिप्य मज्जतस्तान्निरीक्ष्य प्राहसत् । पापसमाचारः पौराणामहिते युक्तः स पौरवचनात् पित्रा नगरान्निर्वासितः । तस्यासमञ्जस्यांशुमान्नाम सर्वलोकस्य संमतः प्रियंवदो वीर्यवान्पुत्रः समजनि । ततः कालेन सगरो यष्टुमुपचक्रमे । अश्वरक्षां दृढधन्वा महारथोंऽशुमान्स्वयमकरोत् । वासवो राक्षसीं तनुमास्थाय यज्ञियमश्वमपाहरत् । अश्वे ह्रियमाणे यजमानमुपाध्याया अब्रुवन् । अयं यज्ञियोऽश्वोऽपनीयते, काकुत्स्थ हर्तारं हत्वाऽश्वमुपनय नो चेत्सर्वेषां नोऽशिवाय यज्ञच्छिद्रं भवेदिति । उपाध्यायवचः श्रुत्वा षष्टिं पुत्रसहस्राणि जगाद । पुत्रा गच्छत विचिनुध्वं यावत्तुरगसन्दर्शस्तावन्मेदिनीं खनत । अहं दीक्षितः पौत्रेणांशुमता सहेह स्थास्यामि यावत्तुरगं द्रक्ष्यामीति । ते सर्वे हृष्टमनसः पितुर्वचनाद्वज्रसमैर्भुजैः पृथ्वीं विभिदुः । वसुधायां भिद्यमानायां वध्यमानानां नागानामसुराणां च महान्निनादोऽभवत् । एवं जम्बूद्वीपं खनन्तस्ते सर्वतः परिचक्रमुः । ततो देवाः सगन्धर्वपन्नगाः संभ्रान्तमनसः पितामहमुपागम्य विषण्णवदना ऊचुः । भगवन्, सर्वा पृथ्वी सगरात्मजैः

खन्यते बहवश्च जलचारिणो महात्मानो वध्यन्ते । अयं यज्ञहरोऽस्माकमनेनाश्वोऽपनीत इति ते सगरात्मजाः सर्वभूतानि हिंसन्तीति । संत्रस्तानां देवतानां वचः श्रुत्वा भगवान्पितामह उवाद । यस्य वासुदेवस्येयं कृत्स्ना वसुधा महिषी स एव प्रभुः कापिलं रूपमास्थाय धरां धारयिष्यति तस्य कोपाग्निना च सगरात्मजा दग्धा भविष्यन्तीति । पितामहवचो निशम्य हृष्टा देवाः स्वं स्थानं जग्मुः । महीं भित्त्वा सगरपुत्राः पितरमेत्याब्रुवत । सर्वा मही परिक्रान्ता बलवन्तश्च यक्षासुरपन्नगा निषूदिता न त्वश्वं तद्धर्तारं वा पश्यामः किमत्र करिष्याम इति । समन्युः सगरः प्रत्युवाच । भूयः पृथ्वीं खनत, अश्वस्य हर्तारमासाद्य कृतार्था निवर्तध्वमिति । पितुर्वचनं श्रुत्वा सर्वे पुत्रा रसातलमभ्यद्रवन् । खन्यमाने रसातले तैश्चतसृषु दिक्षु प्राच्याद्यासु विरूपाक्ष–महापद्म–सौमनस–भद्राख्या दिग्गजाः पृथ्वीधारणे नियुक्ता दृष्टाः । तान्प्रदक्षिणीकृत्य प्रागुत्तरां दिशं रोषेणाखनन् सगरपुत्राः । ततः कपिलरूपधारिणं सनातनं वासुदेवं तस्य नातिदूरे च चरन्तं हयं ददृशुः । तमश्वस्य हर्तारं मत्वा महता क्रोधेनाविष्टाः खनित्रलाङ्गलधरास्तमभ्यधावंस्तिष्ठ तिष्ठ त्वमस्माकं यज्ञियं तुरगं हृतवानसीति चाब्रुवन् । तेषां तद्वचनं श्रुत्वा कपिलो महता रोषेण हुंकारमकरोत् ते च तस्य रोषाग्निना भस्मराशीकृताः ।

पुत्रांश्चिरगताञ्ज्ञात्वा सगरः पौत्रमंशुमन्तमब्रवीत् । शूरः कृतविद्यः पूर्वैश्च तेजसा तुल्योऽसि । तस्मात्पितॄणां गतिमन्वेषय । अभिवाद्यानभिवाद्य विघ्नकरान्हत्वा च सिद्धार्थो निवर्तस्वेति । एवमुक्तोंऽशुमान् धनुः खड्गं चादाय जगाम पितृभिः खातं च मार्गं प्रापद्यत । सर्वान्दिग्गजान्सम्पूज्य पितॄन् वाजिनश्च हर्तारमुद्दिश्य पर्यपृ-

च्छत् । तेऽब्रुवन् । त्वं कृतार्थः सह वाजिना शीघ्रं प्रत्यागामिष्यसीति । ततो भस्मराशीकृतान् पितृव्यांस्तेषामदूरे चरन्तं हयं च ददर्श । पितृव्याणां दशामालोक्य दुःखार्तोऽशुमांश्चुक्रोश तेषां च जलक्रियां कर्तुमियेष । कुत्रापि जलमलब्ध्वा यावन्निपुणं न्यरूपयत् तावत्खगाधिपं पितॄणां मातुलं ददर्श । वैनतेयोंऽशुमन्तं जगाद । पुरुषव्याघ्र, मा शुचः, वधोऽयं लोकसंमतः । अप्रमेयेण कपिलेन यत इमे दग्धास्तस्माल्लौकिकं सलिलमेभ्यो दातुं नार्हसि । पितॄणां सलिलक्रियां हिमवतो ज्येष्ठायां दुहितरि गङ्गायां कुरु । लोकपावनी गङ्गा भस्मराशीकृतानिमांश्चेत्प्लावयेत्तर्हि सर्वे सगरपुत्राः स्वर्गं गच्छेयुः । अश्वं गृहीत्वा निर्गच्छ पैतामहं यज्ञं च निर्वर्तयेति । सुपर्णवचनं श्रुत्वा त्वरितं हयमादायांशुमान्निर्जगाम । दीक्षितं राजानमासाद्य सर्वं तस्मै न्यवेदयत् । सगरो यज्ञं यथाविधि परिसमाप्य स्वपुरमगच्छत् । गङ्गावतरणोपाये निश्चयमगत्वा महता कालेन दिवं गतः ।

सगरे दिवं गतेंऽशुमान्राजा बभूव । तस्य पुत्रो दिलीपो नाम विश्रुतोऽभवत् । तस्मिन्राज्यधुरां न्यस्य हिमवच्छिखरेंऽशुमांस्तपस्तेपे स्वर्गं च लेभे । कथं गङ्गावतरणं कथं सगरपुत्राणां जलक्रिया कथं चैतांस्तारयेयमिति दिलीपश्चिन्तापरोऽभवत् । दिलीपोऽपि सगरपुत्राणामुद्धरणं प्रति निश्चयमगत्वा स्वर्लोकं ययौ । ततस्तस्य पुत्रो भगीरथो नाम परमधार्मिको मन्त्रिषु राज्यमाधाय गङ्गावतरणे निश्चितमतिर्गोकर्णे वर्षसहस्राणि घोरं तपः समातिष्ठत् । ततः सुरगणैः सार्धं पितामहो भगीरथमुपागम्याब्रवीत् । महाराज, तव तपसा प्रीतोऽहं तस्माद्वरं वरयेति । भगीरथ उवाच । यदि भगवान्प्रीतस्तर्हि सगरपुत्राणां भस्म गङ्गया प्लावितं भवतु । अहं च सन्ततिं

याच इति । पितामहो भगीरथं प्राह स्म । भगीरथ, महानेष मनोरथः । इमां हिमवतो ज्येष्ठां सुतां धारयितुं हरान्न कोऽप्यन्यः समर्थस्तस्माच्छूलिनमत्र नियुंक्ष्वेति । एवमुक्त्वा गङ्गां चाभाष्य परमेष्ठी सह देवैस्त्रिदिवं जगाम ।

गते पितामहे भगीरथोऽङ्गुष्ठाग्रनिपीडितां वसुमतीं कृत्वा वत्सरं समुपास्तोमापतिम् । पूर्णे संवत्सरे शम्भुर्नृपमब्रवीत् । प्रीतोऽहं शिरसा शैलराजसुतां धारयिष्यामीति । ततो गङ्गाऽतिमहद्रूपमास्थाय नभस्तः शिवशिरसि महता वेगेन पपाताचिन्तयच्च शङ्करं गृहीत्वा स्रोतसा पातालं व्रजामीति । तस्या अवलेपं ज्ञात्वा क्रुद्धो हरस्तां तिरोभावयितुं मतिं चक्रे । रुद्रस्य मूर्धनि पतिता सा जटामण्डलान्निर्गमं नैव लेभे तस्मिन्नेव जटामण्डले बहून्संवत्सरान्बभ्राम । ततस्तप आस्थाय भगीरथः शङ्करमप्रीणयत् । स गङ्गां बिन्दुसरः प्रति विससर्ज । विसृज्यमानायां तस्यां सप्त स्रोतांसि जज्ञिरे । ह्लादिनी पावनी नलिनी चेति तिस्रो गङ्गाः प्राचीं दिशं सुचक्षुः सीता सिन्धुश्चेति तिस्रः प्रतीचीं दिशं जग्मुः । सप्तानां स्रोतसां सप्तमी दिव्यस्यन्दनमास्थितं भगीरथमन्वगच्छत् । गगनाच्छङ्करशिरस्ततो धरणीमागता गङ्गा यजमानस्य जह्नोर्यज्ञवाटं संप्लावयामास । क्रुद्धो जह्नुर्गङ्गायाः सर्वं जलमपिबत् । ततो देवा गन्धर्वा ऋषयश्च जह्नुमपूजयन्गङ्गां च तस्य दुहितृत्वेऽस्थापयन् । ततस्तुष्टो जह्नुः श्रोत्राभ्यां तामसृजत् । तस्माद्गङ्गा जह्नसुता जाह्नवी चेति प्रोच्यते । पुनर्भगीरथरथमनुगच्छन्ती गङ्गा सागरं प्राप्य रसातलमुपागच्छत्सगरपुत्राणां च भस्म स्वेन पवित्रेण जलेनाप्लावयत् । गङ्गायाः सलिलेन भस्मन्याप्लुते सति ब्रह्मा भगीरथमुवाच । सगरस्य षष्टिः पुत्रसहस्राणि

तारितानि । यावत्सागरस्य जलं लोके स्थास्यति तावत्सगरात्मजा देववद्दिवि स्थास्यन्ति । इयं च गङ्गा लोके तव नाम्ना विश्रुता भविष्यति भागीरथीति । पुरुषर्षभ, गङ्गावतरणं कृत्वा लोके परमं यशः प्राप्तोऽसीति । एवमुक्त्वा पितामहो देवलोकमगच्छत् । भगीरथो यथाक्रममुदकक्रियां कृत्वा स्वपुरं प्रविश्य राज्यं चिरं प्रशशास ॥

Râmāyaṇa–Bâlakâṇḍa.

---

## VIII.

## THE DUTIES OF A BRAHMACHÂRIN IN ANCIENT INDIA.

नित्यं स्नात्वा शुचिर्भूत्वा ब्रह्मचारी देवर्षिपितृतर्पणं समिदाधानं च कुर्यात् । मधु मांसं गन्धं माल्यं स्त्रियः प्राणिनां हिंसनमभ्यङ्गस्नानमक्ष्णोरञ्जनमुपानच्छत्रधारणं कामं क्रोधं लोभं नर्तनं गीतवादनं द्यूतं जनवादं परिवादमनृतं परापकारं च वर्जयेत् । उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्यावदर्थमाहरेदहरहश्च भैक्षं चरेत् । वेदयज्ञैरहीनानां स्वकर्मसु प्रशस्तानां च गृहेभ्यः प्रयतो ब्रह्मचारी भैक्षमन्वहमाहरेत् । गुरोः कुले ज्ञातिकुलबन्धुषु च न भिक्षेत । अन्यगृहाणां त्वलाभे पूर्वं पूर्वं विवर्जयेत् । दूरात्समिध आहृत्य विहायसि च संनिधाय ताभिः सायं प्रातरग्निमतन्द्रितो जुहुयात् । गुरुणा चोदितोऽचोदितो वाऽध्ययन आचार्यस्य च हितेषु यत्नं कुर्यात । शरीरं वाचं बुद्धीन्द्रियमनांसि च नियम्य गुरोर्मुखमीक्षमाणः प्राञ्जलिस्तिष्ठेत् । साध्वाचारः सुसंयतो ब्रह्मचार्यास्यतामित्युक्तः सन्गुरोरभिमुखमासीत । गुरुसन्निधौ सर्वदा हीनान्नवेषः स्याद्गुरोः पूर्वं शयनादुत्तिष्ठेद्गुरोः पश्चाच्च शयीत । आसीनः शयानो भुञ्जानः पराङ्मुखो वा

सम्प्रतिश्रवणसम्भाषे न समाचरेत् । गुरोश्चक्षुर्विषये यथेष्टासनो न भवेत् । गुरोः परोक्षमप्युपाध्यायाचार्यादिपूजावचनोपपदशून्यं तस्य नाम नोदाहरेत् तस्य च गतिभाषितचेष्टितं नैवानुकुर्वीत । यत्र गुरोः परीवादो निन्दा वा प्रवर्तते तत्र कर्णौ पिधातव्यौ ततोऽन्यतो वा गच्छेत् । गोऽश्वोष्ट्रयानप्रासादस्त्रस्तरेषु कटेषु शिलाफलकनौषु च गुरुणा सार्धमासीत । सन्निहिते गुरोर्गुरौ गुरुवद्वृत्तिमाचरेत् । श्रेयःसु, आर्येषु गुरुपुत्रेषु, गुरोश्च बन्धुषु गुरुवद्वृत्तिं नित्यं समाचरेत् । गुरुयोषितो गुरुवत्प्रतिपूज्याः । यथा खनित्रेण खनन्वारि लभते तथा ब्रह्मचारी शुश्रूषुर्गुरुगतां विद्यामधिगच्छति । आचम्य प्रयतः समाहितः शुचौ देशे जप्यं जपन्यथाविधि **संध्ये उभे उपासीत ।** माता पिताऽऽचार्यः पूर्वजो भ्राता चार्तेनापि नावमन्तव्याः । नृणां सम्भवे यं क्लेशं मातापितरौ सहेते तस्य निष्कृतिर्वर्षशतैरपि कर्तुं न शक्या । तस्मान्मातापित्रोराचार्यस्य च सर्वदा प्रियं कुर्यात् । तेषु त्रिषु तुष्टेषु सर्वं तपः समाप्यते । **विषादप्यमृतं ग्राह्यं बालादपि सुभाषितममित्रादपि सद्वृत्तममेध्यादपि सुवर्णं च** । धर्मविद् ब्रह्मचारी गुरवे पूर्वं किंचिन्न दद्यात् स्नास्यंस्तु गुरुणाज्ञप्तो यथाशक्ति गुरवेऽर्थं दद्यात् । क्षेत्रं हिरण्यं गामश्वं **छत्रोपानह**मासनं धान्यं शाकं वासांसि च गुरवे दत्त्वा तत्प्रीतिमर्जयेत् । वेदान् वेदौ वेदं वाऽधीत्याऽविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥ Manusmṛiti II.

---

## IX.
## GAJENDRA-MOKSHA.

अस्ति गिरिवरः क्षीरोदेनावृतस्त्रिकूटो नाम यो रौप्यायसहिरण्मयैस्त्रिभिः शृङ्गैः पयोनिधिं दिशः खं च रोचयन्नास्ते । स समन्ता-

8

त्पयऊर्मिभिरवनिज्यमानाङ्घ्रिर्हरिन्मरकताश्मभिर्भूमिं श्यामलां करोति। सिद्धचारणगन्धर्वविद्याधरैः किन्नरैरप्सरोभिर्जुष्टस्य यस्य कन्दरेषु सङ्गीतनादानाममर्षेण हरयः परशङ्कयाऽभिगर्जन्ति । तस्य गिरेर्द्रोण्यां भगवतो वरुणस्य ऋतुमन्नामोद्यानं सुरयोषितां क्रीडास्थानमासीत् । तदुद्यानं मन्दारैः पारिजातैः पाटलाशोकचम्पकैश्चूतैः पनसैः क्रमुकैः खर्जूरैर्बीजपूरकैर्द्राक्षेक्षुरम्भाजम्बूभिरन्यैश्च विविधैर्वृक्षैरलङ्कृतमासीत् । तस्मिन्नुद्याने लसत्काञ्चनपङ्कजं मत्तषट्पदकूजितनादितं हंसकारण्डवाकीर्णं कुन्दैः कुरबकाशोकैः कुटजेङ्गुदैर्माधवीजालकादिभिश्च वृतं विपुलं सर आसीत् । त्रिकूटगिरिकाननाश्रयः कश्चिद्गजेन्द्रो घर्मतप्तः करिभिः करेणुभिः कलभैश्च वृतो मदजललोलुपैरलिभिश्च निषेव्यमाणस्तत्सरोवराभ्याशमागच्छत् । तस्मिन्सरसि विगाह्य निजपुष्करोद्धृतं हेमारविन्दोत्पलरेणुवासितं निर्मलममृतोपमं जलं निकामं पपौ स्वतनुमद्भिः स्नपयित्वा च गतक्लमो बभूव । दैवचोदितः कश्चिद्बलीयान्ग्राहस्तं चरणेऽग्रहीत् । एवं यदृच्छया व्यसनं गतोऽतिबलः स गजो विचक्रमे । अपरे गजाः पार्ष्णिग्रहा महता बलेन विकृष्यमाणं तं गजं तारयितुं नाशक्नुवन् करेणवश्च दीनमानसा विचुक्रुशुः । इभेन्द्रनक्रयोरेवं नियुध्यमानयोः परस्परं विकर्षतोः समासहस्रं व्यगच्छत् । दीर्घेण कालेन गजेन्द्रस्य मनोबलौजसां महान् व्ययोऽभवत्, जलौकसो ग्राहस्य तु तद्विपर्यय आसीत् । स गजेन्द्रो यदेत्थं सङ्कटं प्राप तदा चिरं ध्यात्वा बुद्धिमिमामभ्यपद्यत । इमे गजा मां मोचयितुं न प्रभवन्ति । विधातुः पाशेनेव ग्राहेण गृहीतोऽहं तं शरणं यामि यः परमेशो बलिनोऽन्तकोरगाद्भीतं शरणागतं परिपातीति । एवं व्यवसितो मनः समाधाय पूर्वस्मिञ्जन्मनि

शिक्षितं जाप्यं जजाप । ओं नमो भगवते तस्मै यस्मादिदं सर्वमजायत । यस्य देवा ऋषयो वा पदं विदुः स मामवतु । यस्य सुमङ्गलं पदं दिदृक्षवो विमुक्तसङ्गा मुनयो वने व्रतं चरन्ति यस्य च जन्म कर्म नामरूपे गुणदोषौ वा न विद्येते स मे गतिः । नमो नमस्तेऽखिलकारणाय निष्कारणाय परेशायानन्तशक्तये सर्वसाक्षिणे गिरां मनसामपि च विदूराय । तमक्षरं परेशमव्यक्तमाध्यात्मिकयोगगम्यं सूक्ष्ममतीन्द्रियमनन्तं परिपूर्णमीडे । विश्वसृजं भूरिकारुण्यमजं परमेश्वरं प्रणमामीति । तं गजमेवमार्तमुपलभ्य जगन्निवासो गरुडेन समुह्यमानो देवैः सह गजेन्द्रमभ्याजगाम । स गजेन्द्रो हरिं खे दृष्ट्वा साम्बुजं करमुत्क्षिप्य वाचमुदैरयत्, नारायणाखिलगुरो भगवन्नमस्त इति । तं पीडितं गजं सग्राहं सरस उज्जहार भगवान् विपाटितमुखाद्ग्राहाच्चामूमुचत् । तदा हरेस्तत्कर्म शंसन्तो ब्रह्माद्या देवाः कुसुमवृष्टिं मुमुचुर्दिव्या दुन्दुभयो नेदुर्गन्धर्वाऽप्सरसो ननृतुर्जगुश्च । स ग्राहो देवलमुनिशापान्मुक्तः सद्यो गन्धर्वरूपमास्थाय पुरुषोत्तमं शिरसा प्रणम्य परमेशयशोऽगायत देवेशं प्रदक्षिणीकृत्य स्वं लोकं जगाम । गजेन्द्रोऽपि भगवत्स्पर्शेनाज्ञानबन्धनाद्विमुक्तो भगवतो रूपं प्राप । स पूर्वस्मिञ्जन्मनि द्रविडेषु पाण्ड्य इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणो राजा बभूव । एकदाऽऽराधनकाले गृहीतमौनव्रतो यावद्धरिं समर्चयामास तावन्महामुनिरगस्त्यः शिष्यैः सह तत्रागच्छत् । अकृतार्हणादिकं तूष्णीं स्थितं तं वीक्ष्य ऋषिश्चुकोप शापं च तस्मा अददात् । असाधुरयं दुरात्मा स्तब्धमतिर्गज इवान्धं तमो विशत्विति । अगस्त्यशापादेवं गजेन्द्रत्वमापन्नं तं गरुडासनो मोचयामास ॥ Bhâgavata–Purâṇa VIII.

## X.
## SARAMA' AND THE PANIS.

रसापारनिवासिनोऽसुराः पणयो नामेन्द्रस्य गा अपजहुर्यत्नतश्च न्यगूहन् । बृहस्पतिस्तदपश्यद्दृष्ट्वा चेन्द्राय शशंस । अथ पाकशासनः सरमां तत्र दौत्येन प्राहिणोत् । तामसुराः पणयः पप्रच्छुः । कस्याणि, कुत आगता त्वं कस्यासि किं वा तव कार्यमिहास्तीति । तान्सरमाऽब्रवीत् । अहमिन्द्रस्य दूती तस्य गा युष्मान् व्रजं चान्विष्यन्ती विचरामीति । तामिन्द्रदूतीं विदित्वा पापचेतसोऽसुरा ऊचुः । सरमे, मा गास्त्वम्, इहास्माकं स्वसा भव, गवां भागं विभजाम इति । साब्रवीत् । अहं स्वसृत्वं वा धनानि वा नेच्छामि । तासां तु गवां पयः पिवामि या यूयं निगूहथेति । ततोऽसुरास्तथेत्युक्त्वा पय आजह्रुः । सा स्वभावाल्लौल्याच्च तदासुरं हृद्यं बलपुष्टिकरं परं संवननं पयः पीत्वा शतयोजनविस्तारां रसां पुनरतरद्यस्याः परे पारे तेषां सुदुर्जयं पुरमासीत् । इन्द्रः सरमां पप्रच्छ कच्चिद्गा दृष्टवत्यसीति । आसुरस्य पयसः प्रभावात्सा नेतीन्द्रं प्रत्युवाच । क्रुद्ध इन्द्रस्तां पदा जघान । ततः पय उद्गिरन्ती भयोद्विग्ना सा पुनरेव पणीन्प्रति जगाम । हरिवाहनः पदानुसारिपद्धत्या रथेन गत्वा पणीञ्जघान ताश्च गाः पुनराहरत् ॥

Brihaddevatâ VIII.

---

## XI.
## THE STORY OF S'YA'VA'S'VA.

पुरा रथवीतिरिति ख्यातो राजर्षिरभवत् । स यक्ष्यमाणोऽत्रिमभिगम्य प्रसाद्य प्राञ्जलिः स्थित्वाऽऽत्मानं कर्तव्यमर्थं च ख्यापयि-

त्वाऽत्रेः सुतमर्चनानसं नामार्त्विज्यायावृणीत । स सपुत्रस्तं राजानं यज्ञसिद्धयेऽभ्यगच्छत् । अत्रिपुत्रस्यार्चनानसः श्यावाश्वो नाम पुत्र आसीद्यः पित्रा मुदा साङ्गोपाङ्गान्सर्ववेदानध्यापितोऽभवत् । अर्चनानाः सपुत्रो गत्वा नृपमयाजयत् । वितते यज्ञे यशस्विनीं राजपुत्रीमपश्यत् । स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् । श्यावाश्वस्य तस्यां तदा मनः सक्तं बभूव । सोऽर्चनाना याज्यं राजानमब्रवीत् संयुज्यस्व मया राजन्निति । श्यावाश्वाय सुतां दित्सुर्नृपः स्वमहिषीमब्रवीत् । अहं कन्यां श्यावाश्वाय ददामि किं ते मतमिति । सा राजानमब्रवीत् । राजर्षिकुलजाऽहम् । न नौ जामाताऽनृषिर्भवेत् । एष श्यावाश्वो मन्त्रान्न हि दृष्टवान् । ऋषये कन्या दीयतामिति । भार्यया सह संमन्त्र्य राजा तं प्रत्याचष्टाऽनृषिर्नैव कश्चिज्जामाता भवितुमर्हतीति । वृत्ते यज्ञे तेन नृपेण प्रत्याख्यात ऋषिर्न्यवर्तत । श्यावाश्वस्य तु राजकन्याया नैव मनो न्यवर्तत । ततस्तौ पितापुत्रौ पुरुमीढं तरन्तं च पार्थिवौ तरन्तमहिषीं च शशीयसीमभिजग्मतुः । तरन्तपुरुमीढौ राजानौ स्वयमृष्योः पूजां चक्रतुः । तरन्तानुमता शशीयसी श्यावाश्वाय बहुविधं वसु गा अश्वांश्च प्राददात् । पितापुत्रौ स्वमाश्रमं गत्वा दीप्ततेजसं महर्षिमत्रिमभ्यवादयेताम् । आसीच्च श्यावाश्वस्य मनसि । मन्त्रस्यादर्शनादहं सर्वाङ्गशोभनां कन्यां न लब्धवान् । अप्यहं चेन्मन्त्रदर्शी स्यां महान्मे हर्षो भवेदिति । एवं चिन्तयतस्तस्य मरुद्गणः प्रादुरासीत् । पार्श्वे संस्थितांस्तुल्यरूपान्समानवयसो रुक्मवक्षसो मरुतः स ददर्श । तांस्तुल्यवयसो देवान्पुरुषविग्रहान्दृष्ट्वा विस्मितः श्यावाश्वोऽपृच्छत्के यूयं स्थेति । तदा रुद्रसूनून्मरुतो देवानबुध्यत । तानृग्भिस्तुष्टाव । यन्मरुतो दृष्ट्वैव

न तुष्टाव यच्च के.यूयं स्थेति पृष्टवांस्तमात्मनो विपुलमतिक्रमं मेने। तया स्तुत्या प्रीता मरुतो गच्छन्तः स्ववक्षोभ्योऽवमुच्य तस्मै रुक्मं ददुः। मरुत्सु प्रयातेषु सुमहायशाः श्यावाश्वो रथवीतेर्दुहितरं मनसाऽगच्छत्। स ऋषिरात्मानं रथवीतये प्रवक्ष्यन्रात्रीं दौत्ये न्ययोजयत्। आर्षेण चक्षुषा संप्रेक्ष्य रथवीतिमपश्यन्तीं रात्रीमब्रवीत्। रम्ये हिमवतः पृष्ठे तिष्ठत्येष इति। देव्या रात्र्या प्रचोदित ऋषेर्नियोगमाज्ञाय कन्यामादाय रथवीतिरर्चनानसमुपेयाय। तस्य पादावुपसङ्गृह्य प्रह्वः कृताञ्जलिर्भूत्वा रथवीतिरहं दार्भ्य इति स्वनाम शशंस। मया सङ्गतिमिच्छंस्त्वं यत्पुरा प्रत्याख्यातस्तत्क्षमस्व नमस्तेऽस्तु भगवन्मा च मह्यं क्रुधः। भगवन्, ऋषेः पुत्रः स्वयमृषिः पिता च ऋषेरसि। इमां स्नुषां प्रतिगृहाणेति स राजाऽब्रवीत्। पाद्यार्घ्यमधुपर्कैः स्वयं पूजयित्वाऽश्वशतं शुल्कं दत्त्वा गृहान्प्रत्यनुजज्ञे॥

Brihaddevatâ V.

---

## XII.

## THE STORY OF NALA.

### Part I.

निषधेषु वीरसेनसुतो धर्मार्थकोविदो रूपवानिष्टैर्गुणैरुपपन्नो नलो नाम महीपतिरासीत्। देवेन्द्र इव देवानां स सर्वेषां मनुजेन्द्राणां मूर्ध्न्यतिष्ठत्। तस्य द्यूतमतीव प्रियमासीत्। तथैव विदर्भेषु भीमपराक्रमोऽप्रजाः प्रजाकामः सर्वगुणोपेतो भीमो नाम नृपो बभूव। तेन नृपेण महर्षिर्नारदः सयत्नं सत्कृतस्तोषितश्च। प्रजैककामाय तस्मै नारदः प्रसन्नः सन्वरं ददौ तव महिषी दमयन्तीं नाम कन्यारत्नं दमं दान्तं दमनं च त्रीनुदारान्कुमाराञ् जनयिष्यतीति। दम-

यन्ती गच्छता कालेन बाल्यात्परां दशामध्युवास । तदा साऽनवद्याङ्गी सर्वाभरणभूषिता सखीनां मध्ये विद्युदिवाशोभत । तादृशी नयनाभिरामा बाला न मानुषेपु यक्षेषु देवेष्वपि वा दृष्टपूर्वा श्रुतपूर्वा वा । नलोऽपि भुवि रूपेणातुलेनापरः कन्दर्प इवाभवत् । नलस्य समीपे जना दमयन्त्या रूपगुणादिसम्पदं कुतूहलाद्भृशं प्रशशंसुः । तेन च नलस्य दमयन्त्यामनुरागस्तथा ववृधे यथा हृद्गतं कामं धारयितुमशक्नुवन्सोऽन्तःपुरसमीपस्थे वन एकाक्येव रहोऽवसत् ।

एकदा सुवर्णपक्षधरान्हंसान् वने विचरतो दृष्ट्वा तेषामेकं स जग्राह । खगो नलं व्याजहार । राजन्, अक्रूरमतिः खगोऽहं न त्वया हन्तव्यः, यदि मम प्राणान्रक्षसि तव प्रियं सम्पादयिष्यामि । दमयन्त्याः सकाशे त्वां तथा प्रशंसिष्यामि यथा त्वदन्यं पुरुषं सा न कदापि मंस्यते तवैव च भार्या भविष्यतीति । एवमुक्तो राजा हंसमुत्ससर्ज । सर्वे हंसाः समुत्पत्य विदर्भान्गत्वा दमयन्तीमुपसृत्य भूमौ निपेतुः । ससखी दमयन्ती प्रेक्ष्य तेषामद्भुतं रूपं विस्मिता तान्ग्रहीतुमैच्छत् । हंसास्तु दमयन्त्या सखीभिश्चानुगम्यमानाः सर्वतः प्रमदावने विससृपुः । यं हंसमन्वधावद्दमयन्ती स मानुष्या गिरा तामुवाच । दमयन्ति, निषधेषु नलो नाम गुणराशिरश्विनोस्तुल्यो रूपेण शासिता प्रजानां मनुरिव भूपतिर्वर्तते । तस्य यदि त्वं भार्या भवेस्तर्हि सुदति तव जन्म सफलं भवेत् । नरेषु नलो वरस्त्वं च स्त्रीणां रत्नम् । यदि युवयोः सङ्गमो भवेत् तर्हि स रत्नेन काञ्चनस्येव सर्वेषां प्रीतये कल्पेतेति । एवमुक्ता दमयन्ती हंसमादिशत् । त्वमप्येतदेव नलं वदेति । हंसः सकलमुदन्तं नैषधाय निवेदयांचक्रे ।

हंसवचनादारभ्य दमयन्ती स्वास्थ्यं न लेभे । नलबद्धपरमानु-

रागा सा विवर्णवदना कृशा तत्क्षणं बभूव । तस्यास्तामवस्थां सखीजनो राज्ञे न्यवेदयत् । विदर्भपतिः कन्यां प्राप्तयौवनां दृष्ट्वा दमयन्त्याः स्वयंवरं कार्यममन्यत । तेन सर्वेभ्यो नृपेभ्यो दमयन्तीस्वयंवरवार्ताख्यापनार्थं दूता विसृष्टाः । हस्त्यश्वरथघोषेण वसुधां पूरयन्तो विचित्रमाल्याभरणैर्विविधायुधधारिभिर्बलैरुपेता राजानो दमयन्त्याः स्वयंवरमभिजग्मुर्भीमेन कृतामातिथेयीं सत्क्रियां च जगृहुः ।

अत्रान्तरे महाप्राज्ञौ महर्षिसत्तमौ देवराजस्य मघोनो भवनं गतौ नारदपर्वतौ तेन सुपूजितौ तस्मा ऊचतुः । मघवन्, विदर्भराजस्य दुहिता दमयन्ती योषिद्वरा स्वयंवरमास्थास्यति । तां लोकस्य ललामभूतां महीक्षितः प्रार्थयन्त इति । अनवसितवचने नारदेऽग्न्यादयो लोकपाला देवराजसभामागत्य नारदवचो निशम्याब्रुवन् । वयमपि तत्र गच्छाम इति । सेन्द्रा लोकपाला विदर्भानभिप्रतस्थिरे । नलोऽपि दमयन्तीं ध्यायन्विदर्भानभ्यगच्छत् । लोकपाला रूपेण रविमिव भ्राजमानं नलं दृष्ट्वा तस्य रूपसम्पदा विस्मिता अन्तरिक्षे विमानानि विष्टभ्य नभस्तलादवतीर्याब्रुवन् । भोः सत्यव्रत नल, दूतो भूत्वास्माकं साहाय्यकं कुर्विति । करिष्य इति तेभ्यः प्रतिश्रुत्य तान्नलः पर्यपृच्छत् । के भवन्तः, कस्य दौत्यं मया कार्यं, कस्मिन्कर्मण्यहं नियुक्त इति । मघवा प्रत्यभाषत । अस्मान्दमयन्त्याः कृते समागतानमरान्निबोध । इन्द्रो वरुणोऽग्निर्यमश्च त्वां दिदृक्षवः समागताः । तेषामेकतमं पतिं वरयस्वेति दमयन्त्यै निवेदयस्वेति । नलः प्राञ्जलिः प्रत्युवाच । यत्र बद्धभावा यूयं तत्रैव ममानुराग इति मां प्रेषयितुं नार्हथेति । शचीपतिः पुनरब्रवीत् । करिष्य इति पूर्वं प्रतिश्रुत्य किमर्थमधुना स्ववचनं न करोषि । व्रज विलम्बं मा कु-

विंति । एवं देवैरुक्तो नलोऽब्रवीत् । सुरक्षितानि राजसदनानि प्रवेष्टुमहं कथं शक्ष्यामीति । अस्मत्प्रभावेण शक्ष्यसीति शक्र उवाच ।

तथेत्युक्त्वा नलो दमयन्त्या निवेशं जगाम । तत्र वपुषा देदीप्यमानां सुकुमाराङ्गीं तनुमध्यां वदनकान्त्या चन्द्रमसमपि प्रत्यादिशन्तीं सखीगणसमावृतां तां दृष्ट्वा तस्य कामो ववृधे सत्यनिष्ठस्तु कथं कथमपि तमधारयत् । नलमप्रतिमरूपं दृष्ट्वा सख्यो विस्मिताः किञ्चिदपि व्याहर्तुमक्षमा अभवन् । दमयन्ती तु स्मितपूर्वं नलमभ्यभाषत । सर्वानवद्याङ्ग वीर, कस्त्वं कुतः समागतः कथं चात्रालक्षितस्ते प्रवेशः । इदं वेश्म सुरक्षितं वर्तते राजा चोग्रशासन इति । नलः प्रत्युवाच । कल्याणि, देवानां दूतं मां नलं विद्धि । तेषामेव प्रभावेणाहमलक्षितोऽत्र प्रविष्टः । शक्राग्निवरुणयमानामेकतमं पतिं वरयेति । दमयन्ती देवेभ्यो नमस्कृत्य प्रहस्याब्रवीत् । राजन्, यत्तुभ्यं रोचते तत्कुरु किं करवाणि । अहं यच्चान्यत् किञ्चिन्ममास्ति तच्च सर्वं तव चरणेऽर्पितं, तवैव कृते मयैते नृपाः संनिपातिताः । त्वयि बद्धानुरागां मां यदि प्रत्याख्यास्यासि तर्हि विषमग्निं जलं रज्जुं वास्थास्य इति । नलः प्रत्युवाच । येषामहं पादरजसाऽपि न तुल्यस्तेषां लोकपालानां प्रणयं विहत्य कथं मां मानुषं पतिमिच्छसि । देवानां विप्रियं कुर्वन्नरो मृत्युमृच्छति । तस्मात्सुरोत्तमान्वरयस्वेति । शोकजलाप्लुतनेत्रा दमयन्ती नैषधमवोचत् । भोः सत्यव्रत नल, सर्वेभ्यो देवेभ्यो नमस्कृत्याहं त्वामेव भर्तारं वृण इति । राजा तामुवाच । चारुहासिनि, देवानां दौत्येनात्रागत्याहं स्वार्थमेव सम्पादयितुं नोत्सह इति । ततो दमयन्ती वाष्पाकुलां वाचं प्रत्याहरन्ती स्मित्वा राजानमब्रवीत् । नरेश्वर, इन्द्रपुरोगमा देवा आयान्तु तेषा-

मेव सन्निधावहं त्वां वरयिष्ये । एवं कृते न ते कोऽपि दोषो भविष्यतीति । ततो नलो देवानाजगाम । ते च तं सर्वमेव वृत्तान्तमपृच्छन् । स च सर्वं यथावृत्तं तेभ्यो न्यवेदयत् ।

पुण्येऽहनि भीमो महीपालान्स्वयंवर आजुहाव । नृपाः कनकस्तम्भरुचिरं तोरणेन विराजितं रङ्गं प्रविश्य विविधेष्वासनेष्वासत । देवैः सह नलोऽपि राजसमितिं प्रविवेश । ततः शुभानना राज्ञां चक्षूंषि मनांसि च प्रभया मुष्णती दमयन्ती रङ्गं प्राविशत् । राज्ञां नामसु संकीर्त्यमानेषु भैमी नलतुल्याकारान्पञ्च पुरुषान्ददर्श । वयोवेशरूपैस्तुल्यानां तेषां यं यं ददर्श तं तं नलं मेने । प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् । यदि मनसा वचसा चाहं नातिचरामि तर्हि देवा नलं मे भर्तारं प्रदिशत स्वं रूपं च धारयध्वं येनाहं पुण्यश्लोकं नलमभिजानीयामिति । दमयन्त्यास्तत्करुणं परिदेवनं श्रुत्वा तस्याश्च नैषधे परममनुरागं दृष्ट्वा देवाः स्वानि चिह्नान्यधारयन् । सा सर्वान् विबुधानस्वेदानम्लानस्रजो रजोहीनान् दृष्ट्वा नलं च तद्विपरीतं दृष्ट्वा विलज्जमाना तस्य वस्त्रान्तं जग्राह परमशोभनां स्रजं च तस्य स्कन्धेऽसृजत् । नलः प्रहृष्टान्तरात्मा दमयन्तीमुवाच । कल्याणिनि, प्रार्थयमानानां देवानामपि सन्निधौ यत्त्वं मामेव भर्तारं वरयसे तस्माद्यावज्जीवं तव वचने रतोऽहं भवेयमिति । नलो दमयन्ती च देवाञ्शरणं जग्मतुः । चत्वारो लोकपाला नलायाष्टौ वरान्दत्त्वा त्रिदिवं गताः । पार्थिवेन्द्रेषु गतेषु भीमो नलस्य दमयन्त्याश्च विवाहं कारयामास । नैषधस्तत्र कानिचिद्दिनान्युषित्वा वैदर्भेण समनुज्ञातः स्वं नगरं जगाम । राजा दमयन्त्या सह विविधान्कामान्भुञ्जानः प्रजा धर्मेण परिपालयंस्ता अरञ्जयत् । इन्द्रसेनं सुतमिन्द्रसेनां नाम कन्यां च दमयन्त्यां जनयामास ।

लोकपाला दिवं गच्छन्तो द्वापरं कलिना सहायान्तं ददृशुः । शक्रः कलिमब्रवीत् । कले, द्वापरेण सह क्व यास्यसीति । दमयन्त्याः स्वयंवरमिति स प्रत्युवाच । इन्द्रः प्रहस्य तमुवाच स्वयंवरो निर्वृत्तोऽस्मत्समक्षं च दमयन्त्या नलो वृत इति । कलिः सकोपं शक्रमुवाद । देवानां समक्षं यद्दमयन्ती मानुषं पतिमवृणोत् तस्मात्तस्या विपुलं दण्डधारणं न्याय्यं भवेदिति । दमयन्त्या नलस्य वरणमस्माभिः समनुज्ञातम् । सर्वगुणोपेतं वेदविदं सत्यव्रतं नलं ललना का नाश्रयेत । यो नलमेवंगुणविशिष्टमपि शप्तुं कामयेत स मूढ आत्मानमेव शपेन्नरकं च व्रजेदिति देवा उक्त्वा दिवं ययुः । गतेषु देवेषु कलिर्द्वापरं व्याजहार । अहं कोपं संयन्तुं नोत्सहे । नल उषित्वा तं राज्याद्भ्रंशयिष्यामि । नासौ दमयन्त्या सह रंस्यते त्वं मम साहाय्यं कर्तुमर्हसीति ।

द्वापरेण सह कलिर्निषधानागत्यान्तरप्रेक्षी चिरं न्यवसत् । द्वादशे वर्षे कलिरन्तरं ददर्श । नैषधो मूत्रं कृत्वोपस्पृश्य पादयोः शौचमकृत्वैव सन्ध्यामन्वास्त । तत्क्षण एव कलिरेनमाविशत् । पुष्करं नलस्य भ्रातरं गत्वा कलिरुवाच । नलेन दीव्य, मया कृतसाहाय्यको भवान्नलमक्षद्यूते जेष्यति निषधान्प्रतिपत्स्यते चेति । पुष्करो भ्रातरं द्यूतायाजुहुवे । महामना राजा तस्याह्वानं न चक्षमे । तयोर्द्यूते सम्प्रवृत्ते नलः कलिनाविष्टो जीयते स्म । कोऽपि नलं द्यूतान्निवारयितुं न शशाक । सर्वे पौरा राजानं द्यूतान्निवारयितुमागताः । तान्दृष्ट्वा भैमी शोकोपहतचेतना नलं बभाषे । नाथ, वृद्धैर्ब्राह्मणमुख्यैर्वणिग्भिर्मन्त्रिभिश्च समन्वितः पौरजनः समागतस्तं द्रष्टुमर्हसीति । एवं पुनः पुनरुक्तोऽपि नलो न किञ्चन प्रत्यभाषत । ततस्ते पौराः सलज्जा

दुःखार्ता आलयाञ्जग्मुः । दमयन्ती स्वं वाक्यमप्रतिपद्यमानं नलं वीक्ष्य वार्ष्णेयं नाम नलस्य सूतमानाययत् । सा वार्ष्णेयमुवाच । यथा यथा नलः पुष्करेण जीयते तथा तथाऽस्य द्यूते रागो वर्धते । राजा मोहितः सन्मम वचनं नाभिनन्दति । नाहं श्रेयोऽनुपश्यामि, तस्मात्सारथे त्वां शरणं प्रपन्नास्मि मे वचनं कुरुष्व । नलस्य प्रियानश्वान्योजयित्वा रथे मे दारकद्वयमारोप्य कुण्डिनपुरं गन्तुमर्हसि । मम ज्ञातिषु दारकद्वयं रथं हयांश्च निक्षिप्य यथाकामं तत्र वसान्यत्र वा गच्छेति । तथेत्युक्त्वा वार्ष्णेयो विदर्भान्गत्वा दारकद्वयं रथं वाहांश्च तत्र निक्षिप्य भीममामन्त्र्य सशोकः प्रतस्थे । अयोध्यां गत्वा राजानमृतुपर्णमुपतस्थौ तेन च सारथ्ये नियोजितोऽभूत् ।

द्यूते हृतराज्यं नलं पुष्करः प्रहसन्नुवाच । अधुना तव न किञ्चिद्वर्तते । दमयन्त्येवैका शिष्टा तां पणस्वेति । एवमुक्तस्य नलस्य हृदयं व्यदीर्यतेव । पुण्यश्लोकः स्वकीयमुत्तरीयं दमयन्त्या आभरणानि चोत्सृज्य नगरान्निश्चक्राम । गच्छन्तं तं दमयन्त्येकवस्त्राऽन्वसरत् । तया सह नगरस्य समीपे नलस्त्रिरात्रमवसत् । पुष्करः पुरे घोषयामास यः कोऽपि नले सम्यगातिष्ठेत् स मया वध्यो भवेदिति । पुष्करस्य वाक्येन सत्कारार्होऽपि नलो जनैर्न पूजितः । त्रिरात्रं जलमात्रवृत्तिर्नलः कांश्चिद्धिरण्यपक्षान्खगान्दृष्ट्वा स्ववाससा समावृणोत् । तस्य वस्त्रमादाय खगा अन्तरिक्षं समुत्पेतुर्दिग्वाससं सलज्जमधोमुखं नलमूचुः । दुर्बुद्धे, वयं तव वस्त्रं जिहीर्षवोऽक्षा इति । आत्मानं विवसनं वीक्ष्य नलः परमदुःखितो भार्यामुवाच । एते बहवः पन्थानो दक्षिणापथं गच्छन्ति पथि च बहवो मूलफलान्विता आश्रमा वर्तन्त इति । इदं वाक्यं नलो दमयन्तीं वारंवारमुवाच । तेन भृशं

दुःखिता दमयन्ती वेपमानोवाच । नाथ, तव सङ्कल्पं शङ्कमानाया मम हृदयं वेपते गात्राणि च सीदन्ति । हृतराज्यं विवस्त्रं क्षुच्छ्रमान्वितं मम पतिं त्वामुत्सृज्य कथमहं गच्छेयम् । भार्यासमं किमपि नास्ति भेषजं नरस्यार्तस्येति । नलः प्रत्यवादीत् । एवमेतत्कः सन्देहः । भीरु, नाहं त्वां त्यक्तुकाम इति । दमयन्त्युवाच । नाथ, यदि मां हातुं नेच्छसि किमर्थं तर्हि विदर्भाणां पन्था असकृदुपदिश्यते । यदि तुभ्यं रोचते सहितावेव विदर्भान्गच्छावः । विदर्भाधिपस्त्वां पूजयिष्यति त्वं चास्माकं गृहे सुखं वत्स्यसीति ।

एवमुक्तो नलः प्रत्यवादीत् । न तव पितरं विषमस्थो गमिष्यामीति । नलस्तया सह कांचित्सभामुपेयाय वैदर्भ्या सह च धरणीतले सुष्वाप । सुकुमारी दमयन्ती क्लेशस्यापरिचिताऽध्वश्रमक्लान्ताऽचिरादेव निद्रां लेभे । नलस्तु शोकोन्मथितचित्तो न शेते स्म । आसीच्चास्य मनसि किं नु मे मरणं श्रेयः, उत जीवितम् । मय्यनुरक्ता दीना दमयन्ती मत्कृते भृशं दुःखिता । यदि मद्विहीना स्यात्तर्हि कदाचित्स्वजनं गच्छेत् । एनां पतिव्रतां न कोऽपि पथि धर्षयितुं शक्नुयादिति कलिसमाविष्टचेतसा निश्चयं कृत्वा दमयन्त्या उत्सर्गे मतिं बबन्ध । ततो राजा विवस्त्रतामात्मनश्चिन्तयित्वा दमयन्त्या वस्त्रस्यावकर्तनाय किंचिदन्विष्यन् सभैकदेशे विकोशमुत्तमं खड्गमाससाद । तेन च वाससोऽर्धं छित्त्वा तेनात्मानं परिच्छाद्य सुप्तामुत्सृज्य दमयन्तीं प्राद्रवत् । पुनस्तु प्रतिनिवृत्य चारुहासिनीं वस्त्रार्धसंवृतां दमयन्तीं दृष्ट्वाऽरोदीत् । कलिना सौहार्देन चाकृष्यमाणो द्वैधीभावकातरेण मनसा दोलेव मुहुरायाति स्म मुहुर्मुहुर्गच्छति स्म । अन्ते च भार्यां विसृज्यैकाकिनीं वनं जगाम ।

गते नले गतक्लमा दमयन्ती प्रबुद्धा यावन्नलं नापश्यत् तावच्छोकाकुला संत्रस्ता च भूत्वाच्चैः प्राक्रोशत्। हा नाथ, किं मां जहासि विजने वने भीतास्मि। महाराज, कथं सत्यवाग्धर्मज्ञो भवान्मां सुप्तां पतिव्रतां भार्यां त्यक्त्वा गच्छति। एतावान् परिहासः पर्याप्तः, भृशं भीतास्मि दर्शयात्मानमिति। तीव्रशोकाकुला रुदती सेतस्ततः पर्यधावत्। कुररीमिव क्रन्दन्तीं धावन्तीमितस्ततः कश्चिन्महाकायोऽजगरः क्षुत्पीडितो जग्राह। अजगरेण ग्रस्यमाना सा बहु व्यलपत्। तस्याः क्रन्दितमाकर्ण्य गहने वने विचरन्कश्चिद् व्याधो जवेनोपगम्य निशितेन शस्त्रेण पाटयित्वाजगरमुखं विशस्य च तं ताममोचयत्। तां सलिलेन प्रक्षाल्याहारेण समाश्वास्य च पप्रच्छ। कस्य त्वं कथं चास्मिन्वने वास इति। दमयन्ती सर्वं यथावृत्तमाचचक्षे। तां सुकुमाराङ्गीं पूर्णचन्द्रनिभाननामर्धवस्त्रसंवीततयाऽतिस्फुटशरीरलावण्यां संलक्ष्य व्याधो मूढमतिः कामशरशरव्यतां प्राप्तः। कामार्तस्तां मृदुवर्णया वाचा सान्त्वयित्वा प्रधर्षयितुमातुरोऽभूत्। पतिराज्यविहीना दुःखार्तैकाकिनी दमयन्ती तस्य दुर्मतेर्भावं विज्ञाय रुषान्विता तं शशाप। यद्यहं नैषधादन्यं मनसापि न चिन्तये तर्हि मृगजीवनोऽयं परासुः पतत्विति। उक्तमात्रे वचनेऽग्निदग्धो द्रुम इव स व्याधः पपात।

निहते व्याधे दमयन्ती सिंहद्वीपिरुरुव्याघ्रवराहर्क्षगणैर्युतं नानापक्षिगणाकीर्णं बदरीबिल्वादितरुभिश्छन्नं वनं प्रतस्थे। तत्र च बहूनाश्रमांस्तडागान् गिरीन् बहूनि पल्वलानि सरांसि च ददर्श। त्रीनहोरात्रानटित्वा दमयन्ती वायुभक्षैरब्भक्षैः संयताहारैर्मुनिभिर्जुष्टमाश्रममण्डलं समियाय। तपोवृद्धानभिवाद्य कुशलं पप्रच्छ। ते च तां

यथान्यायं सम्पूज्य सर्वत्र कुशलं निवेद्योचुः। का त्वं किं च चिकीर्षसि। परमां ते द्युतिं दृष्ट्वा शङ्कतेऽस्माकं मनः । त्वमस्यारण्यस्याधिष्ठात्री देवता, उताहो नद्या अस्या इति । दमयन्ती प्रत्युवाच । नाहमरण्यस्यास्य देवता नापि नद्याः। मां मानुषीं विजानीतेति। आत्मगतं सर्वं वृत्तान्तं तेभ्यो निवेद्य सोवाच। यदि कैश्चिदहोरात्रैर्मम पतिं नलं न द्रक्ष्यामि ततो देहपरित्यागादात्मानं श्रेयसा योक्ष्ये । तं पुरुषर्षभं विना को नु मे जीवितेनार्थ इति। ते सत्यवादिनस्तापसा ऊचुः। भद्रे, उदर्कः कल्याणो भविता, वयं तपःप्रभावेण पश्यामो यदचिरादेव नलं द्रक्ष्यसीति । एवमुक्त्वा ते तापसाः साश्रमा अन्तर्हिताः । तन्महदाश्चर्यं दृष्ट्वा दमयन्ती विस्मिताभवत्। पुनश्च कानने भ्रमितुमारब्धवती। प्रकृष्टमध्वानं समतीत्य प्रसन्नसलिलां विस्तीर्णां रम्यां नदामुत्तरन्तं हस्त्यश्वरथसङ्कुलं महासार्थं सापश्यदुपसृप्य च जनमध्यं विवेश। शोकार्तां विवर्णां कृशां मलिनां वस्त्रार्धसंवीतां च तां दृष्ट्वा केचिन्मनुष्या भीताः प्रदुद्रुवः केचिच्चिन्तापरा बभूवुः केचिच्च विचुक्रुशुः। केचित्तां पप्रच्छुः। कल्याणि, कासि कस्यासि, वने किं मृगयसे, त्वं यक्षी राक्षसी वा, उताहो सुराङ्गना। तथा विधत्स्व यथा नः श्रेयो भवेदिति। दमयन्ती स्ववृत्तान्तं यथावत्तेभ्योऽकथयत्। अयं सार्थः क्व यास्यतीति सार्थवाहं पप्रच्छ। तेनोक्तम्। अयं सार्थश्चेदिराजस्य सुबाहोर्जनपदं गन्तेति।

दमयन्ती तेन सार्थेन पतिदर्शनसमुत्सुका जगाम । बहुतिथे गते काले महावने वणिजः प्रभूतयवसेन्धनं रम्यं तडागं दृष्ट्वा तत्र निवेशाय मतिं चक्रुः। अर्धरात्रे परिश्रान्ते सार्थे सुप्ते सति गिरितटात्पानीयार्थं हस्तियूथमुपागतम्। मार्गं संरुध्य संसुप्तं सार्थं ते वन्या गजाः

सहसा निपत्य ममृदुः । विनिहतप्राये सकले सार्थे सुमहानाराव उदचरत् । अयमग्निरुत्थितः, धावत भो जना इति । एवं दारुणे संक्षये वर्तमाने दमयन्ती प्रबुद्धा वैशसं घोरं दृष्ट्वा संत्रस्तमानसोत्तस्थौ । ये केचन सार्थादविक्षताः पलायितास्तेषां मध्यात्केचिदूचुः । याऽसावद्य महासार्थे दीनोन्मत्तदर्शना नारी प्रविष्टा तयैवैतद्विहितं ध्रुवं सा राक्षसी पिशाची यक्षी वा । नात्र विचारणा कार्या । यदि तां पश्यामस्तर्हि तां लोष्टैः काष्ठैर्मुष्टिभिश्च हनिष्याम इति । तेषां तद्दारुणं वचः श्रुत्वा भीता संविग्ना दमयन्ती वनं प्राद्रवत् । परिदेवयांचक्रे च । अहो ममोपरि कोपो विधेः । मनसा वाचा कर्मणा वा किंचिदण्वप्यशुभं कृतं न स्मरामि । तस्मात्कस्येदं कर्मणः फलम् । नूनं जन्मान्तरकृतं महत्पापं मे वर्तते येनेदृशीं प्राप्तवती दशामतिकष्टाम् । स्वयंवरसमये समागताँल्लोकपालानवमत्य मया नलो वृतस्तेनेमां कष्टां दशामापन्नास्मीति मन्य इति । ब्राह्मणैः सह दमयन्ती परिणते दिवसे चेदिराजस्य सुबाहोस्तुङ्गगोपुरं पुरोत्तममाससाद । दीनां मुक्तकेशीमुन्मत्तामिव गच्छन्तीं तां दृष्ट्वा कुतूहलाड्डिम्भा अनुजग्मुः । बालैः परीतां तां दृष्ट्वा राजमाता धात्रीमुवाच । इयं दुःखिता शरणार्थिनी नारी बालैरनुगम्यमाना क्लिश्यते । गच्छैनां ममान्तिकमानयेति । प्रासादतलमारोप्य राजमाता तामपृच्छत् । असुखाविष्टापि परमं वपुर्बिभर्षि । भासि विद्युदिवाभ्रेषु । कासि कस्य वासीति मे शंसेति । दमयन्ती प्रत्युवाच । मां भुजिष्यां सैरन्ध्रीं पतिव्रतां विजानीहि । द्यूते जितेन भर्त्रा विमनस्कतयाहं विसृष्टा तं मार्गमाणा पर्यटामीति । राजमाताब्रवीत् । कल्याणि, त्वमत्रैव वस, त्वयि मे परमा प्रीतिः । मन्नियोगाद्राजपुरुषास्तव भर्तारं मृगयिष्यन्ते । अपि

वा स एव स्वयमत्रागच्छेदिति । दमयन्ती बभाषे । समयेनात्र वत्स्यामि । उच्छिष्टं नैव भुञ्जीय, कस्यापि पादधावनं नैव कुर्याम्, अन्यान्पुरुषान्नैव प्रभाषेय, यदि मां कश्चित्प्रार्थयेत तर्हि स पुमान्दण्ड्यो भवेत् । भर्तुरन्वेषणार्थं ब्राह्मणान्पश्येयम् । यद्येतत्ते रोचते तर्हि वत्स्यामीति । राजमाता तथेति प्रत्यगृह्णात् स्वदुहितरं च सुनन्दां नामावोचत् । इमां सैरन्ध्रीं देवीकल्पां जानीष्व । त्वत्तुल्यवयस्का ते सखी भवतु । एतया सह मोदस्वेति । ततः प्रभृति दमयन्ती नलमनिशं चिन्तयन्ती तत्र न्यवसत् ।

Mahâbhârata–Vanaparva.

---

## XIII.

## THE STORY OF NALA.

### Part II.

दमयन्तीमुत्सृज्य गहने वने भ्राम्यन्नलो महान्तं दावं ददर्श । तन्मध्ये कस्यचिद्भूतस्य शब्दं शुश्राव पुण्यश्लोक नलाभिधावेति । मा भैषीरित्युक्त्वा नलोऽग्निमध्यं प्रविश्य कुण्डलीकृतं नागराजमपश्यत् । स नागः प्राञ्जलिर्भूत्वा नलमुवाच । मां कर्कोटकं नागं विद्धि । केनचिद् ब्रह्मर्षिणाहं शप्तः । तिष्ठ त्वं स्थावर इव यावन्नलस्त्वां नेष्यतीति । तस्य शापात्पदात्पदमपि विचलितुं न शक्नोमि । मां त्रातुमर्हति भवान् । तव सखा भविष्यामि तस्मान्मामादाय शीघ्रं गच्छेति । एवमुक्त्वा स नागेन्द्रोऽङ्गुष्ठमात्रको बभूव । नलश्च तं गृहीत्वा दावविवर्जितं स्थानमगच्छत् । नाग उवाच । नैषध कानिचित्पदानि गच्छ ततस्तेऽहं श्रेयो विधास्यामीति । दशमे पदे

नलमदशत्कर्कोटकः । दष्टस्य तस्य रूपमन्तर्हितम् । ततः कर्कोटक उवाच । नल, विस्मयं मा कुरु । त्वां जना नाभिजानीयुरिति मयाऽन्तर्हितं ते रूपम् । येन कलिना त्वं भृशं पीडितः स तव शरीरे मद्विषेण दुःखं निवत्स्यति । न ते भयं दंष्ट्रिभ्यः शत्रुभ्यो वा भविता । इतः सूतो बाहुकोऽहमिति ब्रुवन्नृतुपर्णं गच्छाक्षनिपुणम् । यदा त्वमक्षज्ञो भविष्यसि तदा श्रेयसा योक्ष्यसे । यदा स्वं रूपं द्रष्टुमिच्छसि तदा मां स्मर मया दत्ते वाससी च परिधत्स्वेत्युक्त्वा तस्मै वासोयुगं दत्त्वा नागराजोऽन्तरधीयत ।

ततो दशमेऽहनि नल ऋतुपर्णस्य नगरीं प्रविश्य सूतो बाहुकोऽहमिति ब्रुवन्नृतुपर्णमुपातिष्ठत् । उवाच च । मत्समोऽश्वहृदयनिपुणो नास्ति कोप्युर्व्याम् । अन्नसंस्कारमपि जानाम्यहमिति । तं प्रेक्ष्य सुप्रीतमना महीपतिरुवाच । बाहुक, शीघ्रयाने सदा कृतमतिरहं त्वं च ममाश्वाध्यक्षो भव । वार्ष्णेयजीवलौ त्वामुपस्थास्यतस्ताभ्यां सह वसन्मोदस्वेति । नलस्तत्र वसन् सदा सायमेकं श्लोकं जगाद । क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी । स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥ इति । एकदैनं जीवलो ब्रूते स्म । बाहुक कामेवं नित्यं शोचसीति । नलः प्रत्युवाच । कश्चिन्मन्दप्रज्ञः स्वां गुणवतीं पतिव्रतां भार्यां सुप्तां परित्यज भ्रमति । तां स्मृत्वा दिवानिशं शोकेन दह्यमानो निशाकाल इमं श्लोकं गायति । तस्या अपि नार्यो जीवितं दुष्करमिति । एवं नलो दमयन्तीमनुस्मरन्नज्ञातवासं न्यवसदृतुपर्णसमीपम् ।

सभार्ये नलेऽदर्शनं गते भीमोऽमात्यान् द्विजांश्चाहूयाब्रवीत् । यो द्विजो नलं दमयन्तीं च पर्यन्विष्यात्र समानेष्यति तं नगरसंमितं

ग्रामं गवां च शतसहस्रं दास्यामि । न चेच्छक्याविहानेतुं दमयन्ती नलश्च तथापि ज्ञातमात्रयोस्तयोर्गवां सहस्रं दास्यामीति । एतन्निशम्य प्रहृष्टा ब्राह्मणाः सर्वासु दिक्षु सभार्यं नलं विचिन्वन्तो विचेरुः । सुदेवो नाम ब्राह्मणश्चेदिपुरीमागतोऽन्यैर्ब्राह्मणैः सह भोजनाय राजवेश्मनि कृतप्रवेशस्तत्र सुनन्दया सह स्थितां कृशां विवर्णां मलिनां धूमजालेन निबद्धां विभावसोः प्रभामिव दमयन्तीं ददर्श । तां समीक्ष्य भैमीति तर्कयामास । आसीच्चास्य मनसि । इमामद्य दृष्ट्वा कृतार्थोऽस्मि । भर्ता नाम परं नार्या भूषणम् । तेन रहितैषा शुभाङ्ग्यपि न शोभते । कदा नु खलु भर्तुः समागमात् पारं दुःखस्य यास्यति । अहमेनां तावदाश्वासयिष्यामीति । एवं विमृश्य भैमीमुपगम्य सुदेवस्तामब्रवीत् । वैदर्भि, अहं तव भ्रातुः सखा सुदेवो नाम ब्राह्मणो भीमस्य वचनात्त्वामन्वेष्टुमागतः । पिता ते जननी भ्रातरश्च कुशलिनः । तत्रस्थौ ते दारकावपि कुशलिनौ । त्वत्कृते ब्राह्मणाः शतशो महीं भ्रमन्तीति । दमयन्ती सुदेवमभिज्ञाय स्वबन्धुजनस्य कुशलं पप्रच्छ रुरोद च । राजमाता तां रुदतीं दृष्ट्वा सुदेवमब्रवीत् । आचक्ष्व मे केयं कस्य वेयं कथं वा त्वयाभिज्ञातेति । सुदेवोऽपि दमयन्तीगतं सकलं वृत्तं शशंस । अस्या भ्रुवोर्मध्ये मलेनान्तर्हितोऽपि पिप्लुर्मया निरूपितस्तेनाहमेनां विदितवानिति चोवाच । तच्छ्रुत्वा सुनन्दा पिप्लुप्रच्छादकं मलं शोधयामास । तं व्यक्तं पिप्लुं दृष्ट्वा राजमाता सुनन्दा चाश्रूणि समुत्सृज्य तां परिषस्वजाते । राजमातोवाच । त्वं मम भगिन्या दुहितासि । अहं तव माता च दशार्णाधिपतेः सुदाम्नः सुते । यथैव ते पितुर्गेहं तथेदमपि मन्तव्यं त्वयेति । दमयन्ती प्रहृष्टेन मनसा मातुर्भगिनीं प्रणम्य

व्याजहार । अज्ञायमानाऽपि त्वया सदा रक्ष्यमाणा त्वत्समीपमुषितास्मि । यदि चापि किंचिन्मम प्रियं कर्तुमिच्छसि तर्ह्यनुजानीहि मम विदर्भयानमिति । मातृष्वसा तथास्त्वित्युक्त्वा महता बलेन गुप्तां तां नरवाहिना यानेन प्रास्थापयत् । अचिरादेव दमयन्ती विदर्भानाजगाम । गोसहस्रेण पार्थिवः सुदेवमतर्पयत् ।

विश्रम्य दमयन्ती मातरमब्रवीत् । यदि मां जीवन्तीमिच्छसि तर्हि नलस्य प्रत्यानयनाय मतिं कुर्विति । राज्ञ्या प्रचोदितो भीमो ब्राह्मणानाहूय नलान्वेषणाय दिशः प्रास्थापयत् । दमयन्ती तानब्रवीत् । जनसंसत्सु युष्माभिरिदमुच्चैरुद्घोषणीयम् । क्व नु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम । उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ इति । एवं ब्रुवाणान्यदि कश्चित्प्रतिब्रूयात् तर्हि स कः क्व च वर्तत इति युष्माभिर्ज्ञात्वा मह्यमाख्येयमिति ।

गते दीर्घे काले पर्णादो नाम द्विजो निवृत्य वैदर्भीमुवाच । नैषधं मृगयमाणेन मयाऽयोध्यां गत्वा सभायामृतुपर्णस्य त्वद्वचः समुदीरितम् । न कोऽपि मां प्रत्यभाषत । राज्ञा विसृष्टं मां कश्चिदृतुपर्णस्य सूतो बाहुको नाम ह्रस्वबाहुको विरूपो विनिःश्वस्यावदद्द्विजने । वैषम्यमपि प्राप्ताः कुलस्त्रिय आत्मानं गोपायन्ति । विषमस्थेन मूढेन परिभ्रष्टसुखेन यत्सा परित्यक्ता तत्र न क्रोद्धुमर्हतीति । तस्य वचनं श्रुत्वाऽहं सत्वरमत्रागतः । श्रुत्वा भवती प्रमाणमिति । दमयन्ती रहो मातरमेत्योवाच । यत्कुद्धकामास्मि तत्त्वया भीमाय न निवेद्यम् । त्वत्सन्निधौ द्विजोत्तमं सुदेवं गुरुणि कार्ये नियोक्ष्ये । नलं समानेतुं सुदेवोऽद्यैवायोध्यां गच्छत्विति । दमयन्ती विश्रान्ताय पर्णादाय बहु धनं दत्त्वोवाच । इहागते नले

भूयो वसु तुभ्यं दास्यामि। त्वया बहूपकृतं न कोप्यन्य एतावत्करिष्यतीति । ततः सुदेवमाहूय मातुः समक्षं तं दमयन्ती बभाषे। सुदेवायोध्यां गत्वा ब्रूहि ऋतुपर्णम् । दमयन्ती पतिमन्यं वरितुमिच्छति। स च स्वयंवरः श्वः प्रवर्तिष्यते। तत्र बहवो राजानो राजपुत्राश्च गच्छन्ति । स वीरो नलो जीवति मृतो वेति न ज्ञायते। यदि मन्यसे तर्हि शीघ्रं गच्छेति । ततः सुदेवोऽयोध्यां गत्वा यथादिष्टं सर्वमृतुपर्णाय शशंस। सुदेवस्य वचः श्रुत्वा वार्ष्णेयबाहुकप्रभृतीन्सारथीनाहूय ऋतुपर्ण उवाच । दमयन्ती स्वयंवरमास्थास्यति ततोऽहं विदर्भान्गन्तुमिच्छामि। हयतत्त्वज्ञ बाहुक, यदि त्वमभिमन्यसेऽह्नैकेनैव तत्र गन्तव्यमिति । राज्ञेत्थमुक्तस्य नलस्य हृदयं व्यदीर्यत दुःखवज्राभिहतश्च प्रदध्यौ । मया क्षुद्रेण पापबुद्धिना निकृता वैदर्भी नृशंसं कर्तुकामा । स्त्रियो हि नाम प्रकृत्या चला मम दोषश्च दारुणः । दुःखमोहितयाऽनया किं न्वेवं व्यवसितमाहोस्विन्मदर्थं एवायमुपायश्चिन्तितोऽनया। नैवं तादृशी पतिव्रता कर्हिचित्कुर्यात्सापत्या च विशेषतः । यदत्र सत्यमसत्यं वा तद्गत्वा निश्चितं ज्ञास्यामीति। दीनमानसो बाहुकः कृताञ्जलिर्जनाधिपमृतुपर्णमुवाच। राजन्, एकाह्नेन विदर्भनगरीं गमिष्यामीति प्रतिजानामीति। बाहुक ऋतुपर्णेन त्वर्यमाणोऽपि वाजिनः सम्यग्जिज्ञासमानः पुनः पुनर्विचार्य तेजोबलसमन्वितान्हीनलक्षणवर्जितान्वातरंहसः सिन्धुजान्कृशानश्वानानीतवान् । कृशाङ्गांस्तान्दृष्ट्वा राजा सकोपं बभाष । किमिदं व्यवसितं त्वया । किमर्थमस्मान्विप्रलभसे। एते कृशा अश्वा एकेनैव दिनेन महान्तमध्वानं कथमतिक्रमिष्यन्तीति । बाहुक उवाच । एते हया एकेनैव दिनेन विदर्भान्गमिष्यन्ति।

नात्र संशयः कार्यः । यानन्यान्मन्यसे तान्योजयामीति । ऋतुपर्ण उवाच । बाहुक, त्वमेव हयतत्त्वज्ञोऽसि ये तवाभिमतास्तानेव योजयेति । ततश्चतुरः सदश्वान् नलो रथे योजयामास । सत्वरमृतुपर्णो वार्ष्णेयेन सह रथं समारोहत् । बाहुकेन विधिवच्चोद्यमानास्ते अश्वा आकाशं समुत्पेतू रथिनं च मोहयामासुः । बाहुकस्य हयसङ्ग्रहणं रथस्य घोषं च श्रुत्वा वार्ष्णेयश्चिन्तयामास । किं न्वयं देवराजस्य सारथिर्मातलिरथवा हयशास्त्रस्य प्रणेता शालिहोत्र आहोस्विद्राजा नलः । बाहुकस्य नलस्य च वयो ज्ञानं च तुल्ये । केवलं रूपमेव भिद्यत इति । बाहुकस्य हयसंग्रहणमुत्साहमैकाग्र्यं च संप्रेक्ष्य राजा परां मुदमवाप ।

नदीः पर्वतान्वनानि सरांसि चाचिरेणातिक्रामति रथे राजर्तुपर्णः स्वीयमुत्तरीयमधो भ्रष्टमपश्यत् । पटं ग्रहीतुमिच्छामि, एतान्हयान्निगृह्णीष्व यावद्वार्ष्णेयो मम पटं प्रत्यानेष्यतीति प्रोवाच । दूरे भ्रष्टः पटो वयं योजनं समतिक्रम्य स्थिताः अतो नाहर्तुं शक्यत इति नलः प्रत्युवाच । वने फलवन्तं विभीतकं दृष्ट्वा नलस्य हयशास्त्रपाटवेन सासूयो राजाऽभ्यभाषत । बाहुक, ममापि संख्याने बलं पश्य । अस्मिन्वृक्षे यानि फलानि पत्राणि च सन्ति तेषां संख्यां तुभ्यं कथयामीति । नलोऽवतीर्य रथात्तं द्रुमं तूर्णं शातयामास । या फलानां संख्या राज्ञा प्रोक्ता तामेवोपलभ्य विस्मितो नल उवाच । राजन्, तां विद्यां श्रोतुमिच्छामि ययैतज्ज्ञायते । मह्यं संख्यानविद्यामक्षविद्यां च देहि. तुभ्यमहमश्वहृदयं दास्यामीति । ऋतुपर्णः कार्यगौरवाद्धयहृदयलोभाच्च तथास्त्विति बाहुकमब्रवीत् । कृते विद्याविनिमयेऽक्षहृदयज्ञस्य नलस्य शरीरात्कलिः कर्कोटकविषं मुखात्समुद्वमन्निसृतः । कलिः स्वं रूपमाविरकरोत् । यदा तं शप्तुं

नल इयेष तदा वेपमानः प्राञ्जलिः कलिस्तमुवाच । कोपं संयच्छ नृपते, नागराजस्य विषेण दिवानिशं दह्यमानोऽहं तव शरीरेऽवसम्, त्वां शरणं प्रपन्नोऽस्मि मम वचः शृणु । ये मनुजास्त्वां कीर्तयिष्यन्ति तेषां मत्प्रसूतं भयं न भविष्यतीति । एवमुक्तो नलः कोपं न्ययच्छत्कलिश्च बिभीतकं प्रविवेश । ततः प्रभृति बिभीतकोऽप्रशस्तः संवृत्तः । कलिना विमुक्तो नलो रूपमात्रविवर्जितः प्रहृष्टान्तरात्मा हयान्पूर्वस्मादधिकतरं चोदयामास ।

प्रदोषे विदर्भानागतं राजानमृतुपर्णं जना भीमाय न्यवेदयन् । रथघोषेण सर्वा दिशो नादयन् स राजा पुरं प्राविशत् । तं रथघोषं श्रुत्वा दमयन्ती चिन्तयामास । यथाऽसौ रथनिर्घोषो मेदिनीं पूरयन्मम चेत आह्लादयति तथा मन्ये नल एवागतः । अद्य यदि चन्द्राभवक्त्रं संख्यातीतगुणं नलं न पश्यामि तर्हि विनंक्ष्यामीति । एवं विलपन्ती दमयन्ती नष्टसंज्ञेव पुण्यश्लोकनलदिदृक्षया महद्वेश्मारुरोह । सवार्ष्णेयबाहुकं राजानमृतुपर्णं ददर्श । स रथोपस्थादवतीर्य महाराजं भीममुपतस्थे । भीमस्तं परया मुदा ससत्कारं प्रतिगृह्य स्वागतं तेऽस्तु किं कार्यमिति पप्रच्छ । धीमानृतुपर्णोऽपि यदा कञ्चिद्राजानं राजपुत्रं वा नापश्यत्तदा विस्मित उवाच । भवन्तमभिवादयितुमागतोऽहमिति । भीमोऽचिन्तयत् । यथाऽयं बहून् ग्रामानतिक्रम्य योजनशतमागतस्तेन नाल्पेन कारणेन भवितव्यम् । भवतु, अन्ततस्तज्ज्ञास्यामीति । उवाच च । क्लान्तोऽसि विश्रम्यतामिति । भीमेन सत्कृत ऋतुपर्णः प्रहृष्टेन मनसा राजप्रेष्यैर्निर्दिष्टं वेश्म समाविशत् । बाहुकोऽपि हयान्मोचयित्वोपचर्य च शास्त्रविधानतो रथोपस्थ उपाविशत् ।

दमयन्ती वार्ष्णेयं विरूपं बाहुकं राजानमृतुपर्णं च दृष्ट्वा चिन्तयामास । रथनिस्वनस्तावन्नलस्येवासीत् । न च नलं पश्यामि । किं तु वार्ष्णेयेन सैव विद्या शिक्षिता भवेदिति । एवं विचिन्तयन्ती दमयन्ती नैषधान्वेषणाय दूतीं समाहूय तामुवाच । केशिनि, गच्छ जानीहि क एष रथोपस्थे समुपविष्टो ह्रस्वबाहुकः सारथिः । एनमभ्येत्य मृदुपूर्वं कुशलं पृष्ट्वा यत्पर्णादेन पूर्वमुक्तं तदेव व्याहरेति । केशिनी बाहुकं गत्वोवाच । स्वागतं ते । दमयन्त्या वचो ब्रवीमि । कदा यूयं प्रस्थिताः किमर्थमिहागता इति । बाहुकोऽब्रवीत् । दमयन्त्या द्वितीयः स्वयंवरो राज्ञा श्रुतस्ततः स प्रस्थितः । अहं चास्य सारथिरस्मीति । केशिन्युवाच । कोऽसौ तृतीय इति । बाहुकः प्रत्यवदत् । पुण्यश्लोके नले कुत्रापि गतेऽदर्शनतां तस्य सूतो वार्ष्णेय इति ख्यात ऋतुपर्णमुपतस्थौ । सोऽयमिति । अपि जानासि क्व नु नलो गत इति केशिन्या पृष्टम् । बाहुक उवाच । न कोऽपि नलं जानाति यतः स नष्टरूपो गूढो लोकेषु चरतीति । केशिन्युवाच । यत्त्वया पूर्वं ब्राह्मणाय पर्णादायोक्तं तत्पुनर्वद । दमयन्ती तदेव वाक्यं पुनः श्रोतुमिच्छतीति । केशिन्या वचनं निशम्य नलस्य हृदयं व्यथितं लोचने चाश्रुपूर्णे बभूवतुः । किं तु दुःखं निगृह्य बाष्पगद्गदया वाचा सोऽब्रवीत् । कुलस्त्रियो वैषम्यमपि प्राप्ताः कुलव्रतं गोपायन्ति । विषमस्थेन परिभ्रष्टसुखेन तेन यत्सा परित्यक्ता तत्र न तया क्रोधः कार्य इत्युक्त्वा नलो बाष्पं निग्रहीतुं नाशकन्मुक्तकण्ठं च रुरोद । केशिनी बाहुकस्य विकारं दमयन्त्यै न्यवेदयत् । तस्य विकारश्रवणात्तं नलं शङ्कमाना दमयन्ती केशिनीं पुनरब्रवीत् । गच्छ केशिनि, किञ्चिदप्यब्रुवाणा तत्समीपस्था

यद्यत्स करोति तत्सर्वं निरीक्ष्य तं परीक्षस्व। याचमानायापि जल-मग्निर्वा न देय इति। केशिनी बाहुकं गत्वा तस्य चेष्टितानि नि-रीक्ष्य दमयन्तीं प्रतिनिवृत्योवाच। नैव मया तादृशो मानवो दृष्ट-पूर्वः श्रुतपूर्वो वा। ह्रस्वं द्वारमासाद्य स न कदापि प्रणमति तं दृष्ट्वा तु द्वारमुत्सर्पति। तेनावेक्षिताः कुम्भा जलपूर्णा भवन्ति। सहसैवास्य हव्यवाहनः प्रज्वलति। अग्निं संस्पृश्यापि नासौ दह्यते। एतान्यन्यानि च तस्य चेष्टितानि दृष्ट्वाऽहं भृशं विस्मितेति। देवानामिन्द्रादीनां प्रसादाल्लब्धाद्भुतप्रभावो नल एवायं बाहुक इति मन्यमानया दम-यन्त्या समादिष्टम्। पुनर्गत्वा नलेन पाचितं मांसमपकृष्यागच्छेति। केशिनी तथा कृतवती। नलसिद्धं मांसं भक्षयित्वा बाहुकं नलं निश्चयेन मत्वा सा भृशं दुःखिताऽभूत्। ततः सह केशिन्या स्वाप-त्यद्वयं बाहुकाय प्रेषितं दमयन्त्या। सुरसुतोपमौ सुतौ दृष्ट्वा दुःख-परीतात्मा बाहुकः प्ररुरोद। एवं विकारमसकृद्दर्शयित्वा सहसा पुत्रावुत्सृज्य केशिनीमवदत्। मम पुत्रयोः सदृशमिदं दारकद्वयम-तोऽहं वाष्पमुत्सृष्टवान्। बहुशो गच्छन्तीमागच्छन्तीं च त्वां जनः शङ्केत। वयं चातिथयः, तस्माद्गच्छेति।

दमयन्ती सर्वं केशिन्याः श्रुत्वा तां मात्रे प्रेषयामास। केशिनी बभाषे। देवि, भर्तृदारिका ब्रूते। बाहुको नलशङ्कया मया बहुवारं परीक्षितः। केवलं रूप एव मे संशयः। स्वयमेव वेदितुमिच्छामि। तातानुज्ञया स वा प्रवेश्यतां मां वाऽनुज्ञातुमर्हसीति। देव्योक्तो भीमो दुहितुरभिप्रायमन्वजानात्। पित्राऽभ्यनुज्ञाता दमयन्ती के-शिनीमुवाच शीघ्रं पितृशासनात्त्वं बाहुकं गत्वा तमिहानयेति। केशिनी बाहुकमुवाच। भीमस्य शासनादहमत्रागता. राजवेश्म प्रवि-

शेति । बाहुकश्चिरं ध्यात्वा केशिन्या सह दमयन्तीनिवेशनं प्रविवेश । दमयन्तीं दृष्ट्वा शोकाविष्टो नलोऽश्रुपरिप्लुतो बभूव । तं तथाविधं दृष्ट्वा तीव्रशोकपरीता काषायवसना मलिनाङ्गयष्टिर्दमयन्ती जगाद । यः पुरा देवानपहाय मया वृतस्तं पुण्यश्लोकं नलं विहाय कोऽन्योऽनागसं श्रममोहितां प्रियां भार्यां वने त्यक्त्वा गच्छेदिति । एवं ब्रुवत्यां दमयन्त्यां नलस्य नेत्राभ्यां शोकजं प्रावर्तताबद्धधारं वारि । शोकार्तो राजा तामब्रवीत् । यन्मम राज्यं प्रनष्टं यच्च त्वामहमत्यजं तत्सर्वं कलिना कृतं नाहं स्वयं त्वां त्यक्तवान् । स पापः कलिर्मां विमुच्य गतोऽतोऽहमिह त्वदर्थमेवागतः, नातः परं मे प्रयोजनम् । भीमनृपतिशासनाद्दूता भूम्यां चरन्ति घोषयन्ति च भैमी द्वितीयं भर्तारं वरिष्यतीति । एतच्छ्रुत्वा नृप ऋतुपर्ण इहोपस्थित इति । नलस्य परिदेवनं श्रुत्वा दमयन्ती भीता वेपमाना प्राञ्जलिरब्रवीत् । न मां पापिनीमार्यपुत्रः शङ्कितुमर्हति । मया देवानपहाय पुरार्यपुत्रो वृत इति नैव विस्मर्तव्यम् । पर्णादेन कथितं वचो निशम्य त्वां नलं शङ्कमानया मया तवागमनार्थमेवैष उपायश्चिन्तितः । त्वामन्तरेण न कोप्यन्योऽश्वैरेकाहेन योजनशतं गन्तुं शक्तः । यद्येवमपि न प्रत्येषि तर्हि तवैतौ पादौ सत्येन स्पृशेयम् । अयं भूतसाक्षी सदागतिर्लोके चरति, यदि पापं चराम्यहं तर्हि मे प्राणानपहरत्विति । एवं दमयन्त्योक्ते वायुरन्तरिक्षादभाषत । नैषा कृतवती पापं नल सत्यं ब्रवीमि । सूर्यश्चन्द्रोऽहं चास्याः शीलशुद्धौ साक्षिण इति । तथा वायौ ब्रुवति पुष्पवृष्टिः पपात, दिशः प्रसेदुर्मरुतः सुखा ववुर्देवदुन्दुभयश्च सुस्वरं नेदुः । ततो राजा तदद्भुतं दृष्ट्वा नागराजं संस्मृत्य वासोद्वयं परिधाय स्वीयं

रूपं लेभे । तदा नलं स्वरूपिणं दृष्ट्वा भैमी तमालिलिङ्ग स च तां परिषस्वजे । ततः सर्वं दमयन्त्या जननी भीमायाकथयत् । ततस्तौ पुरातनाः कथाः कथयन्तौ गतां रात्रिमपि नाजानीताम् ।

अन्येद्युर्नलो भीमं नृपं दृष्ट्वाऽभिवादयामास । ततो दमयन्ती पितरमवन्दत । भीमो जामातरं महता सत्कारेणापूजयत् । नलं भार्यासङ्गतं दृष्ट्वा पौराणां सुमहानुत्सवोऽभवत् । ऋतुपर्णोऽपि बाहुकरूपिणं नलं दमयन्त्या समायुक्तं श्रुत्वाऽतीव मुमुदे । ऋतुपर्णो नलमुवाच । कच्चित्तव नापराद्धोऽस्म्यज्ञातवासे मद्गृहे वसतः । यदि बुद्धिपूर्वमबुद्धिपूर्वं वा मया किञ्चिदनुचितं कृतं तत्क्षन्तव्यमिति । नल उवाच । न भवता किमपि मय्यपराद्धम् । यथा मम तथैव तव गृहेऽहं सुखं न्यवसमिति । ततो राजर्तुपर्णः स्वपुरं जगाम । नलो मासमेकं कुण्डिनपुर उषित्वा भीममापृच्छ्याल्पपरिवारो निषधान्प्रतस्थे । ततः कतिपयैरेवाहोभिर्नगरं प्रविवेश । पुष्करमासाद्योवाच । आवां पुनर्दीव्याव, यच्च बहु द्रव्यं मयार्जितं तत्सर्वं सार्धं दमयन्त्या पणो भवतु पुनर्द्यूतं प्रवर्तताम् । यदि द्यूतं न वाञ्छसि तर्हि युद्धाय संनद्धो भव । द्वयोरेकतरे बुद्धिं कुर्विति । पुष्करः प्रहसन्प्रत्यवादीत् । दिष्ट्या वर्धे यद्भवतः पुनर्द्यूते मतिः समुत्पन्ना । द्यूते निर्जिते त्वयि दमयन्ती मां समुपस्थास्यति । ततोऽहं तां वरवर्णिनीं कामयमानः कृतकृत्यो भवामीति । तस्यासम्बद्धप्रलापिनो वचः श्रुत्वा क्रुपितो नलस्तस्य शिरश्छेत्तुमियेष । रोषताम्राक्षस्तमुवाच । किं वृथा जल्पितेन, पणावहा इति । ततः पुष्करस्य नलस्य च द्यतं प्रावर्तत । नलेन पुष्करो द्यूते जितः । नल उवाच । मूढ पुष्कर, सर्वं राज्यमधुना मयि स्थितम् । वैदर्भीं द्रष्टुमपि न शक्ष्यसि । यदहं पुरा

जितो नासौ तव प्रभावः । कलिरेव तत्र कारणम् । नाहं परकृतं दोषं त्वय्याधास्ये । तव प्राणानवसृजामि । त्वं मे भ्राता शरदां शतं जीव । तुभ्यं स्वमंशं वितरामि त्वयि च मम प्रीतिर्भविष्यतीति । एवं नलेन सान्त्वितः पुष्करस्तं परिष्वज्योवाच । तव कीर्तिरक्षय्याऽस्तु । वर्षायुतं जीवेति । ततः पुष्करः स्वपुरं ययौ । पुष्करं प्रस्थाप्य राजा स्वपुरं प्रविश्य पौरान्सान्त्वयामास । पुरे महोत्सवे संप्रवृत्ते महत्या सेनया राजा दमयन्तीमानयत् । ततस्तया सह विविधान्भोगानुपभुञ्जानो यज्ञान्राजसूयादीन् विधिवदाहृत्य चिरं राज्यसुखमन्वभूत् ॥

Mahâbhârata–Vanaparva.

---

## XIV.

## THE TALE OF DUSHYANTA AND S'AKUNTALÂ.

एकदा दुष्यन्तो नाम राजा मृगयां कर्तुं वनं जगाम । एकेनातिरंहसा मृगेन दूरमाकृष्टः सारथिमुवाच । सूत, कथमनुपतत एव मे मृगः प्रयत्नप्रेक्षणीयः संवृत्त इति । सूतोऽब्रवीत् । आयुष्मन्, उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यतीति । दुष्यान्ताज्ञया मुक्तेष्वभीषुषु मृगजवाक्षमयेव धावतोऽश्वान्वीक्ष्य राजोवाच । अतीत्य हरितो हरींश्च वर्तन्ते वाजिनः । यदालोके सूक्ष्मं तत्सहसा विपुलतां व्रजति यच्च प्रकृत्या वक्रं तदपि नयनयोः समरेखं भवति । रथजवात् किञ्चिदपि न मम

दूरं नापि पार्श्वस्थमिति । एवमुक्त्वा मृगं व्यापादयितुं यावच्छरस-न्धानमकरोत्तावद्भो राजन्नाश्रममृगोऽयं न हन्तव्यो न हन्तव्य इत्युच्चै-र्व्याहरन्वैखानसः सह द्वाभ्यामन्याभ्यां तपस्विभ्यां बाणपातवर्तिनः कृष्णसारस्यान्तर उपस्थितः । तद्वचः श्रुत्वा निगृह्यन्तां वाजिन इति सूतं ससम्भ्रममादिदेश । वैखानसेनोक्तम् । तूलराशौ वह्निरिवास्मि-न्मृदुनि मृगशरीरे वाणो नैव संनिपात्यः । क्व बत हरिणकानामति-लोलं जीवितं क्व च तव निशितनिपाता वज्रसाराः शराः । तस्मा-त्सायकं प्रतिसंहर । आर्तत्राणाय वः शस्त्रं नानागसि प्रहर्तुमिति । दुष्यन्तेन प्रतिसंहृते शरे वैखानस उवाच । पुरुवंशप्रदीपस्य भवतः सदृशमेवैतत् । एवंगुणोपेतं चक्रवर्तिनं पुत्रमाप्नुहि । वयं समिदाहर-णाय प्रस्थिताः । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः प्रविश्य प्रतिगृह्यतामातिथेयः स-त्कारः । कुलपतिः कण्वो दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थमिदानीमेव गतः । वयमपि साधयामोऽधुनेति । राजा बभाषे । सूत चोदयाश्वान् । पुण्याश्रमद-र्शनेन तावदात्मानं पुनीमह इति । तपोवननिवासिनामुपरोधो मा भूदिति दूर एवाश्रमस्य रथं स्थापयित्वा राजाऽवातरत् । विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नामेत्युक्त्वा दुष्यन्तः सूतायाभरणानि धनु-श्चोपनीयार्पयदुवाच च सूत यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिन इति । यदा दुष्यन्त आश्रमं प्रवि-वेश तदाऽस्य शुभाशंसी दक्षिणो बाहुः पस्पन्दे । तस्मिन्नेव क्षणे दक्षिणेन वृक्षवाटिकामित इतः सख्यावित्यालापमशृणोत् । तदा शकुन्तला सह प्रियंवदानसूयाभिधानाभ्यां सखीभ्यां स्वप्रमाणानुरूपैः

सेचनघटैर्बालपादपेभ्यः पयो दातुं तत्रैवागता । ता निपुणं निरूप्य तासां मधुरयाऽऽकृत्या विस्मितो दुष्यन्तश्छायामाश्रित्य प्रतिपालयन्स्थितः । अनसूयोवाच । शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्तेति । शकुन्तला प्रत्यवदत् । न केवलं तातनियोग एव । अस्ति मे सोदरस्नेह एतेष्विति । अनेन संवादेन शकुन्तलां कण्वदुहितरं ज्ञात्वा राजाऽत्मगतमाह स्म । असाधुदर्शी खलु तत्रभवान्काश्यपो य इमामाश्रमधर्मे नियुङ्क्ते । काममननुरूपमस्या वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । शैवलेनानुविद्धमपि सरसिजं रम्यम्, मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति, इयं तन्वी वल्कलेनाप्यधिकमनोज्ञा, मधुराणामाकृतीनां किमिव मण्डनं न भवति । अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथवा कृतं सन्देहेन । इयं शकुन्तलासंशयं क्षत्रपरिग्रहक्षमा यदार्यं मे मनोऽस्यां साभिलाषम् । सतां हि सन्देहपदेषु वस्तुष्वन्तःकरणप्रवृत्तयः प्रमाणम् । तथापि तत्त्वत एनां ज्ञास्यामीति । तदा सलिलसेकसंभ्रमोद्गतो मधुकरो नवमालिकामुज्झित्वा शकुन्तलाया वदनमभ्यवर्तत । भीता शकुन्तला परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेणाभिभूयमानामिति व्याजहार । सख्यौ सस्मितं प्रोचतुः । के आवां परित्रातुम् । राजरक्षितव्यानि तपोवनानि नाम । तस्माद्दुष्यन्तमाक्रन्देति । अवसरोऽयमात्मानं दर्शयितुमिति मत्वा दुष्यन्तः सत्वरमुपसृत्योवाच । न भेतव्यं न भेतव्यम् । दुर्विनीतानां शासितरि पौरवे वसुमतीं शासति सति कस्तपस्विकन्यास्वविनयमाचरतीति । सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः । अनसूयोवाच ।

आर्ये, न किमप्यत्याहितम्। इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूतेति। दुष्यन्तं प्रेक्ष्य तपोवनविरोधिनो मदनविकारस्य गमनीया संवृत्ता शकुन्तला। अनसूया दुष्यन्तं बभाषे। आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते। कतम आर्येण राजर्षिवंशोऽलंक्रियते कतमो वा विरहपर्युत्सुकजनः कुतो देशः किंनिमित्तं वा सुकुमारतरोऽपि तपोवनागमनपरिश्रमस्यात्मा पदमुपनीत इति। आत्मापहारं कर्तुमिच्छन्राजा प्रत्युवाच। यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः। वयमपि तावद्भवत्यौ सखीगतं किमपि पृच्छामः। कथमियं वां सखी शाश्वते ब्रह्मणि वर्तमानस्य काश्यपस्यात्मजेति। अनसूयोवाच। शृणोत्वार्यः। अस्ति कौशिक इतिगोत्रनामधेयो महाप्रभावो राजर्षिः। तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता। तेन तस्यां सम्भूतेयमस्मत्सखी, उज्झिताया अस्याः शरीरसंवर्धनादिभिस्तातकाश्यपः पितेति। राजा पप्रच्छ। किमनया मदनव्यापाररोधि वैखानसं व्रतमाप्रदानान्निषेवितव्यमाहोस्विदात्मसदृशेक्षणवल्लभाभिर्हरिणाङ्गनाभिः सममत्यन्तं निवत्स्यतीति। प्रियंवदोवाच। धर्मचरणेऽपि परवशोऽयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्प इति। अनेन प्रियंवदाया वचनेन कुपितेव शकुन्तला गमिष्याम्यनसूये, इमामसम्बद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामीत्युवाच। सखी न युक्तमकृतसत्कारमतिथिविशेषमुज्झित्वाश्रमवासिनो जनस्य स्वच्छन्दतो गमनमित्युक्त्वाऽनसूयया निवार्यमाणाऽपि किञ्चिदनुक्त्वा शकुन्तला प्रस्थितैव। प्रस्थितां शकुन्तलां ग्रहीतुमिच्छन्नपि राजा

विनयेन वारितप्रसर आत्मानं न्यगृह्णात् । प्रियंवदा शकुन्तलां निरुध्योवाच । वृक्षसेचने द्वे धारयसि मे । आत्मानं मोचयित्वा ततो गमिष्यसीति । दुष्यन्तः प्रियंवदामुवाच । भद्रे वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तदहमेनामनृणां करोमीति । एवमुक्त्वाऽङ्गुलीयं दातुमैच्छत् । नाममुद्राक्षराणि वाचयित्वोभे यदा परस्परमवालोकयेतां तदा दुष्यन्तो बभाण । अलमस्मानन्यथा सम्भाव्य । राज्ञः परिग्रहोऽयमिति । प्रियंवदयोक्तम् । नार्हत्येतदङ्गुलीयकमङ्गुलिवियोगम् । आर्यस्य वचनेनैवानृणा नामैषा । शकुन्तले मोचितास्यानुकम्पिनाऽऽर्येणाथवा महाराजेन । गच्छेदानीमिति । शकुन्तला प्रत्युवाच का त्वं विस्रष्टव्यस्य रोद्धव्यस्य वेति । किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यादित्येवं यावद् राजाऽचिन्तयत्तावद्धो भोस्तपस्विनः संनिहितास्तपोवनरक्षायै भवत प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्त इति कस्यचिदुक्तिं शुश्राव । तच्छ्रुत्वा राजाऽऽत्मगतमूचे । अहो धिक् । पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु प्रतिगमिष्यामस्तावदिति । आरण्यकवृत्तान्तेन पर्याकुलाऽनसूया यदोटजगमनायानुज्ञामयाचत तदा राजोवाच वयमपि यथाऽऽश्रमपीडा न भविष्यति तथा प्रयतिष्यामह इति । तत्रान्तरे शकुन्तला सखीमुवाच । अनुसूये, अभिनवकुशसूच्या परिक्षतं मे चरणं कुरबकशाखापरिलग्नं च वल्कलम् । तावत्परिपालयतं मां यावदेतन्मोचयामीत्युक्त्वा सव्याजं विलम्ब्य राजानमवलोकयन्ती सह सखीभ्यां निर्जगाम । राजाऽपि शकुन्तलाव्यापारादात्मानं निवर्तयितुमक्षमो मन्दौत्सुक्यो नगरगमनं प्रति समेत्यानुयात्रिकान्नातिदूरे तपोवनस्य निवेशयेयमित्युक्त्वा निष्क्रान्तः ।

मृगयाशीलस्य दुष्यन्तस्य प्रियवयस्यो विदूषको ग्रीष्मविरलपाद-पच्छायासु वनराजिष्वाहिण्ड्य निर्वेदमापन्नो राजानमुवाच । प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां गात्राणामनीशोऽस्मि सं-वृत्तः । तत्प्रसीद मामेकाहमपि विश्रमितुं विसृजेति । राजाऽपि शकुन्तलामनुस्मृत्य मृगयायां मन्दादरः सेनापतिमाहूयोवाच । सेना-पते, मन्दोत्साहः कृतोऽस्मि मृगयापवादिना प्रियवयस्येनेति । सेना-पतिरब्रवीत् । कोऽपरो मृगयासदृशो विनोदः । तया मेदश्छेदकृशोदरं वपुर्लघुरुत्थानयोग्यं भवति, सत्त्वानामपि भयक्रोधयोर्विकृतिमच्चित्तं लक्ष्यते । यदिषवश्चले लक्ष्ये सिध्यन्ति स धन्विनामुत्कर्षः । मिथ्यैव मृगयां व्यसनं वदन्तीति । आश्रमस्यातिसंनिकृष्टतया राजा सेना-पतेर्वचो नाभ्यनन्ददुवाच च । निवर्तय पूर्वगतान्वनग्राहिणः । यथा च न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्या इति । एव-मुक्ते सेनापतिर्निष्क्रान्तः परिजनश्च । एवं निर्मक्षिके कृते राजा शकुन्तलाया अनुपमां रूपसम्पदं तदीयं भावं चोपवर्ण्य यावद्विदूषकं पृच्छति केनापदेशेन सकृदप्याश्रमे वसाम इति तावत्स प्रत्युवाच । त्वं राजा । अतो नीवारषष्ठभागग्रहणार्थं गच्छेति । राजोवाच । मूर्ख, यत्फलं नृपाणां वर्णेभ्य उत्तिष्ठति तत्क्षयि, आरण्यकास्तु तपसः षष्ठं भागमक्षय्यं नो ददतीति । तस्मिन्नेव क्षणे द्वावृषि-कुमारौ राज्ञो दीप्तिमतोऽपि वपुषो विश्वसनीयतां प्रेक्ष्य विस्मितौ फलान्युपहारीकृत्य राजानं विज्ञापयामासतुः । विदितो भवानाश्रम-वासिनामिहस्थः । तत्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता स-नाथीक्रियतामाश्रम इति भवन्तं प्रार्थयन्त इति । राजा स्वकार्या-

नुकूलं तेषामभ्यर्थनां मानयित्वा सबाणकार्मुकं रथमुपस्थापयेति सारथिमादिदेश । यदा सज्जीभूतो रथस्तदाऽऽगामिनि चतुर्थदिवसे प्रवृत्तपारणो म उपवासो भविष्यति तत्र दीर्घायुषाऽवश्यं संनिहितेन भवितव्यमिति राजमातुराज्ञां गृहीत्वा करभको नाम भृत्य आगतः । एकतस्तपस्विकार्यमन्यतो गुरुजनाज्ञा । द्वयमपि तस्यानतिक्रमणीयमासीत् । कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभूतचित्तो राजा विदूषकमवदत् । सखे त्वमम्बाभिः पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हतीति । तपोवनोपरोधः परिहार्य इति राजाऽनुयात्रिकान्विदूषकेण सह प्रास्थापयत् । विदूषकश्चपलप्रकृतितया शकुन्तलाविषयां प्रार्थनामन्तःपुरेभ्यः कदाचित्कथयेदिति मनसि कृत्वा राजा तमुवाच । वयस्य ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । क्व वयं क्व मृगशावैः सममेधितः परोक्षमन्मथो जनः । तस्मात्सखे परिहासविजल्पितं वचः परमार्थेन न गृह्यतामिति ।

प्रविष्टमात्र एव दुष्यन्ते निरुपप्लवानि तापसानां कर्माणि संवृत्तानि । संस्थिते कर्मणि सदस्यैरनुज्ञातो राजा मदनातुरः श्रमक्लान्तमात्मानं विनोदयितुमिच्छन्प्रियादर्शनादृतेऽन्यच्छरणमपश्यंस्तामन्वेष्टुमारभत । इतस्ततः परिक्रम्य वेतसपरिक्षिप्तं लतामण्डपमासाद्य सकुसुमास्तरणं शिलापट्टमधिशयानां सखीभ्यामन्वास्यमानां बलवदस्वस्थशरीरां शकुन्तलामपश्यत् । तासां विश्रम्भकथितानि शुश्रूषमाणः प्रच्छन्नं स्थितः । अनसूया शकुन्तलामुवाच । सखि प्रष्टव्याऽसि किमपि । बलीयान्खलु ते सन्तापः । अनभ्यन्तरे खल्वावां

मदनगतस्य वृत्तान्तस्य । किं तु यादृशीतिहासनिवन्धेषु कामयमाना-नामवस्था श्रूयते तादृशीं ते पश्यामि । तत्कथय किंनिमित्तमयं ते स-न्तापः। **विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्येति।** प्रियंवदयाप्युक्तम् । सखि सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपे-क्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चतीति । शकुन्तला प्रत्युवाच । कस्मै वान्यस्मै कथयि-तव्यम् । आयासयित्रीदानीं वां भविष्यामीति । उभे अप्यूचतुः । अत एव निर्वन्धः । **स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भव-तीति** । ततः शकुन्तलोवाच । यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिस्तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता । तद्यदि वामनुमतं तत्तथा वर्तेथां यथा तस्य राजर्षेरनु-कम्पनीया भवामि । अन्यथा सिञ्चतं मे उदकमिति । दूरगत-मन्मथां कालहरणस्याक्षमां शकुन्तलां मत्वा तत्प्रेमास्पदीभूतं च दुष्यन्तं पौरवाणां ललामभूतं ज्ञात्वा तस्या अभिलाषः सखीभ्यामभिनन्दितः । कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं सम्पा-दयाव इति यदाऽनसूयाऽचिन्तयत्तदा प्रियंवदोवाच । निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् । स राजर्षिरस्यां स्निग्धदृष्ट्या सूचिताभिलाष इमान्दिवसान्प्रजागरकृशो लक्ष्यते । तस्मान्मदनले-खोऽस्याः क्रियताम् । तं सुमनोगोपितं कृत्वा देवशेषापदेशेन तस्य हस्तं प्रापयिष्यामि । तेन ह्यात्मन उपन्यासपूर्वं चिन्तय कमपि ललितपदंबन्धमिति । अयं सुकुमारः प्रयोगोऽनसूयाया अरोचत । शकुन्तला गीतिकां चिन्तयित्वा शुकोदरसुकुमारे नलिनीपत्रे निक्षि-प्तवर्णां कृत्वाऽवाचयत् । तव न जाने हृदयं मम पुनः कामो दि-

वाऽपि रात्रिमपि । निर्घृण तपति बलीयस्त्वयि युक्तमनोरथान्यङ्गानि । इति । तनुगात्रि, मदनस्त्वामनिशं तपति मां पुनर्दहत्येव, यथा दिवसः शशाङ्कं ग्लपयति न तथा कुमुद्वतीमित्युक्त्वा राजा सहसोपासर्पत् । शिलातलैकदेशमध्यासीने राजनि प्रियंवदोवाच । आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः । तेन हीयं नौ प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुमिति । अनसूयाऽपि बभाषे पौरव, बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वाहयेति । ततो राज्ञा प्रतिज्ञातम् । परिग्रहबहुत्वेऽपि मम कुलस्य द्वे प्रतिष्ठे समुद्रवसना भूमिरियं च युवयोः सखीति । एतेन राज्ञो वचनेन सख्यौ निर्वृते । एष इतस्ततो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति संयोजयाव एनमिति सव्याजमुक्त्वा ते निष्क्रान्ते । तयोर्गमनेन यदा शकुन्तलोद्विग्नेवाभवत्तदा दुष्यन्तस्तामुवाच । अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तत इति । गन्तुमिच्छन्तीं शकुन्तलां स बलान्न्यवर्तयत् । पौरव, रक्ष विनयं मदनसन्तप्ताऽपि न खल्वात्मनः प्रभवामीति यदा शकुन्तलोवाच तदा दुष्यन्तेनोक्तम् । भीरु, अलं गुरुजनभयेन । **विदितधर्मा** तत्रभवान्कण्वो नात्र दोषं ग्रहीष्यति । बह्व्यो राजर्षिकन्यका गान्धर्वेण विवाहेन परिणीताः पितृभिश्चाभिनन्दिताः श्रूयन्त इति । एवमुक्त्वा चुम्बनार्थं राजा शकुन्तलाया मुखमुन्नमयितुमैच्छत् । यावच्छकुन्तला पर्यहरत्तावदार्या गौतमी शकुन्तलाशरीरवृत्तान्तोपलम्भाय पात्रहस्ता लतामण्डपमागता । राजा विटपान्तरितोऽतिष्ठत् । गौतमी शकुन्तलां

शिरसि जलेनाभ्युक्ष्य परिणतो दिवसस्तस्मादुटजमेव गच्छाव इत्युक्त्वा सह शकुन्तलया निष्क्रान्ता। राजा निःश्वस्योवाच। अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। पक्ष्मलाक्ष्यास्तस्या मुखं कथमप्युन्नमितं मया न चुम्बितम्। क्व नु खलु संप्रति गच्छामि। अथवा इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामीति। तस्मिन्नेव क्षणे पिशिताशनानां छायाभ्यो भीतैस्तापसैः पुनराहूतस्तापसरक्षणार्थं निर्ययौ।

इष्टिं परिसमाप्य ऋषिभिर्विसर्जितो दुष्यन्त आत्मनो नगरं प्रविश्यान्तःपुरसमागतः शकुन्तलागतं वृत्तान्तं स्मरति वा न वेति चिन्ताऽनसूयायाः समुत्पन्ना। प्रियंवदा तामुवाच। सखि विश्रब्धा भव। न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तातकाश्यपः पुनरिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति। अनसूया प्रत्युवाच। गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः सङ्कल्पः। तं यदि दैवमेव सम्पादयति नन्वप्रयासेन कृतार्थो गुरुजनः। तस्मात्तातस्यानुमतं भवेदेतदित्यहं पश्यामीति। तस्मिन्नेव क्षणे दुर्वासा ऋषिरात्मानमतिथित्वेन न्यवेदयत्। यद्यपि शकुन्तलोटजसंनिहितासीत्तथापि दुष्यन्तमेव ध्यायन्ती दुर्वाससमतिथिसत्कारेण न पूजयामास। सुलभकोपोऽसौ महर्षिस्तामशपत्। यमनन्यमानसा विचिन्तयन्ती तपोधनं मामुपस्थितं न वेत्सि स बोधितोऽपि त्वां न स्मरिष्यतीति। पूजार्हे महर्षौ शकुन्तलामपराद्धां ज्ञात्वाऽनसूयया विज्ञापितो दुर्वासाः। भगवन् प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति। न मे वचनमन्यथा भवितुमर्हति किं त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्र-

यित्वा दुर्वासा अन्तर्हितः । यदा दुष्यन्तो राजधानीं प्रस्थितस्तदा तेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव पिनद्धम् । द्वयोरेवावयोर्मुखे शापवृत्तान्त एष तिष्ठतु यतो रक्षितव्या प्रकृतिपेलवा प्रियसखीति प्रियंवदानसूयाभ्यां निश्चयः कृतः । गते बहुतिथे कालेऽपि यदा दुष्यन्तो लेखमात्रमपि न व्यसृजत्तदोद्विग्नाऽनसूयाऽचिन्तयत् । अभिज्ञानमङ्गुलीयकं राज्ञे प्रेषयामः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् । ननु सखीगामी दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं नु खलु करणीयामिति । यदा कण्वः प्रवासान्निवृत्याग्निशरणं प्रविष्टस्तदाऽशरीरिण्या वाण्या शकुन्तलागतो वृत्तान्तस्तस्मै कथितः । ततो लज्जावनतमुखीं शकुन्तलां परिष्वज्य कण्वेनैवमभिनन्दितम् । वत्से सुशिष्यपरिदत्तेव विद्याऽशोचनीयाऽसि मे संवृत्ता । अद्यैव ऋषिपरिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति । यावच्छकुन्तलया अङ्गेष्वाभरणविनियोगं सख्यावकुरुतां तावत्स्नानोत्थितः कण्वोऽचिन्तयत् । शकुन्तलाऽद्य यास्यतीति हृदयमुत्कण्ठया संस्पृष्टं कण्ठः स्तम्भितबाष्पवृत्तिकलुषो दर्शनं च चिन्ताजडं जातम् । अरण्यौकसो ममेदृशं तावत्स्नेहाद्वैक्लव्यं तस्मात्कथं नु गृहिणो नवैस्तनयाविश्लेषदुःखैः पीड्यन्त इति । यदा शकुन्तला पितरमवन्दत तदा तामानन्दपरिवाहिणा चक्षुषा वीक्ष्य स तस्यै वरं ददौ । ययातेः शर्मिष्ठेव त्वं भर्तुर्बहुमता भव त्वमपि सेव पूरुं सम्राजं सुतमाप्नुहीति । ततोऽग्नीन्प्रदक्षिणीकृत्य शकुन्तला लताभगिनीं वनज्योत्स्नामामन्त्र्य पुत्रकृतकं मृगपोतकं सान्त्वयित्वा सह पित्रा शार्ङ्गरवा-

दिभिः शिष्यं राजधानीं प्रस्थिता। यदा कण्वः शकुन्तलां दूरमनुससार तदा शार्ङ्गरव उवाच। भगवन्, ओदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते तदिदं सरस्तीरम्। अत्र सन्दिश्य प्रतिगन्तुमर्हसीति। यावत्कण्वो दुष्यन्तस्यानुरूपं सन्देशमाचिन्तयत्तावन्नलिनीपत्रान्तरितविग्रहमपि सहचरमदृष्ट्वाऽऽरटन्तीं चक्रवाकीं प्रेक्ष्य शकुन्तला दुर्निमित्तमिति मत्वा दुःखिता बभूव। कण्व उवाच। शार्ङ्गरव, त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः। अस्मान्संयमधनान्साधु विचिन्त्यात्मनश्च कुलं त्वय्यस्याः स्नेहप्रवृत्तिं चावेक्ष्य त्वयेयं सामान्यप्रतिपत्तिपूर्वकं दारेषु दृश्येति। ततः कण्वः शकुन्तलामनुशशास। वत्से, त्वं पतिकुलं प्राप्य गुरूञ्छुश्रूषस्व, सपत्नीजने प्रियसखीवृत्तिं कुरु, विप्रकृताऽपि रोषणतया भर्तुः प्रतीपं मा स्म गमः, परिजने दक्षिणा भाग्येषु चानुत्सेकिनी भव, एवं युवतयो गृहिणीपदं यान्ति वामाः कुलस्याधय इति। यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शयेति सखीभ्यामुक्ते शकुन्तलेवाद। अनेन वां सन्देहेनाकम्पितास्मीति। सख्यावूचतुः। मा बिभीहि। स्नेहः पापशङ्कीति। ततः शकुन्तला शार्ङ्गरवादिभिः सह प्रस्थिता कण्वश्च सह प्रियंवदानसूयाभ्यामाश्रममभिप्रतस्थे। प्रतिनिवर्तमानश्च मेने। हन्त भोः शकुन्तलां पतिगृहं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः। कन्या हि परकीय एवार्थः। तामद्य परिग्रहीत्रे संप्रेष्य ममायमन्तरात्मा प्रत्यर्पितन्यास इव प्रकामं विशदो जात इति॥

Abhijñāna–S'âkuntala.

# XV.

# THE TALE OF DUSHYANTA AND S'AKUNTALA'.

## Part II.

दुर्वाससः शापाद्राजा शकुन्तलागतं सर्वं विसस्मार । एकदा गीतमाकर्ण्य कारणमजानन्नपि समुत्कण्ठितो बभूव । तदैव शकुन्तलया सह शार्ङ्गरवादयो राजकुलमागच्छन् । 'भोः कामं धर्मकार्यमनतिपात्यं देवस्य तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाऽविश्रमो लोकतन्त्राधिकारः । भानुः सकृद्युक्ततुरङ्ग एव, गन्धवहो रात्रिंदिवं प्रयाति, शेषः सदैवाहितभूमिभारः, षष्ठांशवृत्तेरपि राज्ञ एष एव धर्मः' इति चिन्तयित्वा कञ्चुकी राजानं विज्ञापयामास । एते खलु हिमवतो गिरेरुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणमिति । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसीति सोमरातमुपाध्यायं सन्दिश्य दुष्यन्तस्तपस्विदर्शनोचितं संनिहितहोमधेनुमग्निशरणालिन्दमारुह्य प्रतिपालयन्स्थितः । ततः शकुन्तलां पुरस्कृत्य गौतमीसहिता मुनयः प्राप्ताः । राजा पप्रच्छ । अपि निर्विघ्नतपसो मुनय इति । ऋषय ऊचुः । सतां रक्षितरि त्वयि धर्मक्रियाविघ्नः कुतः । घर्मांशौ तपति कथं तम आविर्भविष्यतीति । शार्ङ्गरवः कण्वसन्देशं राज्ञे कथयामास । यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । यतस्त्वमर्हतां प्राग्रसरो नः स्मृतोऽसि शकुन्तला च मूर्तिमती सत्क्रिया । तुल्यगुणं वधूवरं

समानयन्प्रजापतिश्चिरस्य वाच्यं न गतः । तदिदानीमापन्नसत्त्वेयं प्रतिगृह्यतां सहधर्मचरणायेति । शापदोषाद् विस्मृतसर्ववृत्तान्तो राजा किमिदमुपन्यस्तमित्युवाच । इमं वचनोपन्यासं पावकममन्यत शकुन्तला । शार्ङ्गरव उवाच । कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः । ज्ञातिकुलैकसंश्रयां भर्तृमतीं नारीं सतीमपि जनोऽन्यथा विशङ्कते । अतः प्रमदा परिणेतुरप्रियापि स्वबन्धुभिस्तत्समीप इष्यत इति । राजाब्रवीत् । किं वात्रभवती मया परिणीतपूर्वेति । शार्ङ्गरवोऽपृच्छत् । किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञ इति । राजेमामभिजानीयादिति गौतमी ततः शकुन्तलाया अवगुण्ठनमपानयत् । शकुन्तलां निर्वर्ण्य राजा तथोपनतमक्लिष्टकान्ति रूपं प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् जोषमास्त । शार्ङ्गरवेण पृष्टः प्रत्युवाच । भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रति प्रतिपत्स्य इति । शारद्वतो नामापरः कण्वशिष्यः प्रोवाच । शकुन्तले वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवान्दुष्यन्त एवमाह । दीयतामस्मै प्रत्ययप्रतिवचनमिति । इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन, आत्मेदानीं मे शोचनीय इति व्यवसितमेतदित्यात्मगतमभिधाय शकुन्तला प्रकाशमुवाच । पौरव न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामीति । एवमुक्त्वा मुद्रास्थानं परामृश्य यदाऽङ्गुलीयकशून्यामङ्गुलिमुपलेभे तदा सविषादं गौतमीमुखे दृष्टिं चिक्षेप । गौतम्युवाच । नूनं ते शक्रावताराभ्यन्तरे

शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकमिति । राजोवाच । इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यत इति । शकुन्तलोवाच । अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि । नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् । तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयाऽयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति । 'एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः' इति राज्ञोक्ते शकुन्तला सरोषमभिदधे । 'अनार्य, आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते' इति । तदेषा भवतः कान्ता त्यज वैनां गृहाण वा । उपपन्ना हि दारेषु सर्वतोमुखी प्रभुतेति राजानमुक्त्वा शारद्वतः प्रस्थितः शकुन्तलाऽपि तमन्वगच्छत् । तदा शार्ङ्गरवः सरोषं निवृत्य तां जगाद । शकुन्तले यथा क्षितिपो वदति तथा यदि त्वमसि किं त्वयोत्कुलया पितुः । अथ त्वमात्मनो व्रतं शुचि वेत्सि पतिकुले तव दास्यमपि क्षमम् । तिष्ठ, साधयामो वयमिति । ततः पुरोहितो राजानमुवाच । अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् त्वं साधुभिरादिष्टपूर्वः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यत्यभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपगमनमुपस्थितमेवेति । यथा गुरुभ्यो

रोचत इति राजा पुरोहितस्य वचोनुमेने । भगवति वसुधे देहि मे विवरमिति रुदती शकुन्तला सह पुरोधसा तपस्विभिश्च निष्क्रान्ता । यावद्राजा पर्याकुलः शकुन्तलागतमेवाचिन्तयत्तावत्पुरोहितः प्रतिनिवृत्योवाच । देव परावृत्तेषु कण्वशिष्येषु सा बाला स्वानि भाग्यानि निन्दन्ती बाहूत्क्षेपं क्रन्दितुं प्रवृत्ता । अप्सरस्तीर्थाद्‌ारादेकं स्त्रीसंस्थानं ज्योतिरेनामुत्क्षिप्य तिरोऽभूदिति । राजोवाच । भगवन् प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवानिति । ततः पुरोहितो निष्क्रान्तः । राजा पर्याकुलमानसः, 'कामं प्रत्यादिष्टां मुनेस्तनयां परिग्रहं न स्मरामि बलवत्तु दूयमानं मे हृदयं प्रत्याययतीव' इति वदन् शयनभूमिं जगाम ।

शक्रावताराभ्यन्तरवासी कश्चिद्धीवरो जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणमकरोत् । एकस्मिन्दिवसे तेन रोहितमत्स्यः खण्डशः कल्पितः । तदा तस्योदराभ्यन्तरे रत्नभासुरमङ्गुलीयं तेन दृष्टम् । पश्चाद्विक्रियाय दर्शयन् नागरिकेण राजश्यालेन गृहीतः । तस्याङ्गुलीयकस्य विस्रगन्धमाघ्राय मत्स्योदरसंस्थितमेव तदिति निश्चित्य धीवरं प्रतिपालयितुं रक्षिणावादिश्य राजश्यालो राजकुलं जगाम । तत्र राज्ञे यथागमनमङ्गुलीयकं निवेद्य राजशासनमादाय प्रतिनिवृत्तः।'मुच्यतामेष जालोपजीवी, उपपन्नः किलास्याङ्गुलीयकस्यागमः, एष भर्त्राऽगुलीयकमूल्यसंमितो दापितः प्रसादः' इत्युक्त्वा पुरुषं बन्धनादुन्मुच्यार्थं तस्मै प्रायच्छत् । सत्यमूढपूर्वा मया तत्रभवती रहसि शकुन्तला मोहाच्च प्रत्यादिष्टेति स्वाङ्गुलीयदर्शनादनुस्मृत्य पश्चात्तापमुपगतो दुष्यन्तः कुत्रापि निर्वृतिमलभमानः शिशिरातपच्छेदरमणीये प्रमदवनोद्देश आ-

त्मानं विनोदयितुं सह विदूषकेणागतः । तस्मिन्नेव काले सानुमती नामाप्सरा मेनकासम्बन्धेन शकुन्तलां स्वशरीरभूतां मन्यमाना मेनकया च दुहितृनिमित्तमादिष्टा दुष्यन्तस्योदन्तं प्रत्यक्षीकर्तुमाकाशयानेना- जगाम । राजा वेत्रवतीमाज्ञापयामास । मद्वचनादमात्यपिशुनं ब्रूहि । चिरप्रबोधान्न सम्भावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवे- क्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति । ततो दुष्यन्तो विदू- षकमुवाच । वयस्य रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्य- भिचारि वचः । कुतः । मुनिसुताप्रणयस्मृतिरोधिना तमसा समेदं मनो मुक्तं प्रहरिष्यता मनसिजेन च धनुषि चूतशरो निवेशित इति । शकुन्तलायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयितुं राजा माधवीमण्डपं जगाम । चित्रफलके स्वहस्तलिखितां तत्रभवत्याः श- कुन्तलायाः प्रतिकृतिमानयेति चतुरिकां नामासन्नपरिचारिकामादि- देश । माधवीमण्डप उपविष्टो राजा विदूषकमब्रवीत् । सखे सर्व- मिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् पूर्वमपि त्वया न कदाचित्सङ्कीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृत- वानसि त्वमिति । विदूषकः प्रत्यवदत् । 'न विस्मरामि । किं तु सर्वं कथयित्वाऽवसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्या- ख्यातम् । मयाऽपि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवि- तव्यता बलवती' इति । निराकरणविक्लवायाः शकुन्तलायाः समवस्था- मनुस्मृत्य बलवदशरणो राजा यदा विदूषकेण समाश्वासितस्तत्रभ- वत्या समागमः कालेन भविष्यतीति तदोवाच । स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत्फलमेव पुण्यम् । असंनिवृत्त्यै तदती-

तम्, एते मनोरथा नाम तटप्रपाता इति । विदूषको राजानं पप्रच्छ । इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्ताभ्यासं प्रापितेति । राजा प्रत्युवाच। स्वनगराय प्रस्थितं मां प्रिया यदा सबाष्पमाह कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति तदा मुद्रामिमां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता । दिवसे दिवसे मदीयमेकैकं नामाक्षरमत्र गणय, यावदन्तं गच्छसि तावन्मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यतीति । तच्च दारुणात्मना मया मोहान्नानुष्ठितमिति । तदैव चतुरिका चित्रफलकहस्ता प्रत्याजगाम । चित्रगतां शकुन्तलां वीक्ष्य सानुमती जगाद । अहो एषा राजर्षेर्वर्तिकानिपुणता । जाने सखी मेऽग्रतो वर्तत इति । अर्धलिखितं तच्चित्रमासीद्येन राजा चतुरिकामादिदेश । गच्छ वर्तिकां तावदानयेति । वर्तिकाकरण्डकं गृहीत्वा यावच्चतुरिका माधवीमण्डपमुद्दिश्य प्रस्थिता तावत्स करण्डकस्तस्या हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याऽहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः । यावद्देव्या विटपलग्नमुत्तरीयं तरलिकाऽमोचयत् तावच्चतुरिकया निर्वाहित आत्मा । राजा वयस्यमुवाच । उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षत्विति । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापयेत्युक्त्वा चित्रफलकमादाय विदूषको द्रुतपदं निष्क्रान्तः । तदैव प्रतीहारी पत्रहस्ता प्रविवेश । तां पत्रहस्तां प्रेक्ष्य कार्योपरोधं परिहरन्ती देवी प्रतिनिवृत्ता । प्रतीहारी विज्ञापयामास । देव, अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति । ततो राजा पत्रिकां गृहीत्वाऽवाचयत् । समुद्रव्यवहारी सार्थवाहो धनमित्रो

नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसञ्चय इति । अनन्तरमुवाच राजा । एतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । वेत्रवति, महाधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्या स्यादिति । प्रतीहारी प्रत्युवाच । इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयत इति । दुष्यन्तः प्रतीहारीमुवाच । ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि । अन्यच्च । येन येन स्निग्धेन बन्धुना प्रजा वियुज्यन्त स स पापादृते तासां दुष्यन्त इति घुष्यतामिति । राजा दीर्घमुष्णं च निःश्वस्यात्मगतं प्राह स्म । एवं भोः सन्ततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्त इति । सार्थवाहवृत्तान्तेन विमनायमानं राजानं दृष्ट्वा चतुरिका प्रतीहारीमुवाच । देवमाश्वासयितुं मेघप्रतिच्छन्दादार्यमाढव्यं गृहीत्वाऽऽगच्छेति । राज्ञोवाच । अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः । अस्मात्परं यथाश्रुति सम्भृतानि निवपनानि नः कुले कः करिष्यतीति नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्तीति । एवमुक्त्वा मोहमुपगतः । सानुमती लतान्तरिताऽऽत्मगतमुवाच । अहमिदानीमेव निर्वृतमेनं करोमि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति । तस्माद्युक्तमेनं कालं प्रतिपालयितुम् । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामीति । तस्मिन्नेव क्षणेऽब्रह्मण्यमब्रह्मण्यमिति माढव्यस्यार्तस्वरेण दुष्यन्तः पुनश्चेतनां लेभे । प्रतीहारी ससंभ्रमं प्रविश्योवाच ।

परित्रायतां देवः संशयगतं वयस्यं योऽदृष्टरूपेण केनापि सत्त्वेनाक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपित इति । राजा सशरं धनुरादाय सोपानमार्गमागत्य सर्वं शून्यं दृष्ट्वोवाच । 'भोस्तिरस्करिणीगर्वित मदीयमस्त्रं त्वां द्रक्ष्यति । एष तमिषुं सन्दधे यो वध्यं त्वां हनिष्यति रक्ष्यं च द्विजं रक्षति । **हंसो हि क्षीरमादत्ते तन्मिश्रा अपो वर्जयति'** इति । एवमुक्त्वाऽस्त्रं समधत्त । तदा विदूषकमुत्सृज्य मातलिरिन्द्रसारथिः प्रादुर्भूयोवाच । हरिणाऽसुरास्तव शरव्यं कृताः, इदं शरासनं तेषु विकृष्यताम् । सतां प्रसादसौम्यानि चक्षूंषि सुहृज्जने पतन्ति न दारुणाः शरा इति । राजा मातलिं दृष्ट्वाऽस्त्रमुपसंहृत्य स्वागतं व्याजहार । विदूषकः सविस्मय उवाच । अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यत इति । मातलिनोक्तम् । अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः । स किल तव सख्युः शतक्रतोरजय्यः, तस्य त्वं रणशिरसि निहन्ता स्मृतोऽसि । तस्मादात्तशस्त्रो भवानिदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठतामिति । राजोवाच । अनुगृहीतोऽहमनया मघवतः सम्भावनया । अथ वयस्यं प्रति भवता किमेवं प्रयुक्तमिति । मातलिः प्रत्यवदत् । कुतश्चिदपि मनःसन्तापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । यतोऽग्निश्चलितेन्धनो ज्वलति, विप्रकृतः पन्नगः फणां कुरुते, **प्रायो जन्तुः स्वं महिमानं क्षोभात्प्रतिपद्यत** इति । राजा विदूषकमुवाच । वयस्य, अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि । केवला त्वन्मतिः प्रजाः परिपालयतु, अधिज्यमिदं धनुरन्यस्मिन्कर्मणि व्यापृतमिति । तथेत्युक्त्वा विदूषको निष्क्रान्तः । राजाऽपि रथमारुह्य मातलिना सह जगाम ।

मघोनो नियोगमनुष्ठाय तेन सविशेषं सत्कृतो दुष्यन्तो मातलिना सहाकाशयानेन स्वर्गान्महीमभिप्रतस्थे । मार्गे दुष्यन्तो मातलिमुवाच । स खलु मम मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्यामृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धेति । मातलिरुवाद । किमिव नामायुष्मानमरेश्वरान्नार्हति । भवता सुखपरस्य हरेस्त्रिदिवमुद्धृतदानवकण्टकं कृतमिति । राजा सविनयमभिदधे । अत्र खलु शतक्रतोरेव महिमा स्तुत्यः । यन्महत्स्वपि कर्मसु नियोज्याः सिध्यन्ति तमीश्वराणां सम्भावनागुणमवेहि । सहस्रकिरणश्चेदरुणं धुरि नाकरिष्यत्तर्हि किमसौ तमसां विभेत्ताऽभविष्यदिति । हेमकूटं नाम पर्वतं दृष्ट्वा तस्मिंश्च तपस्यन्तं स्वायंभुवान्मरीचेर्जातं प्रजापतिं मातलेरुपश्रुत्य प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामीति दुष्यन्त उवाच । ततो मातलिर्मारीचाश्रमस्य समीपे रथमस्थापयत् । राजाऽऽश्रमं प्रविश्य भगवते मारीचायात्मानं निवेदयितुं मातलिं प्रेषयामास । दक्षिणं बाहुं स्पन्दमानमुपलभ्य यावद्राजाऽब्रवीन्मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथेति तावदर्धपीतस्तनं सिंहशिशुं प्रक्रीडितुं बलात्कारेण कर्षन्तं बालं तपस्विनीभ्यामनुबध्यमानं ददर्श । तस्मिन्बाले पुत्र औरस इव दुष्यन्तस्य मनोऽस्निह्यत् । एनं बालमृगेन्द्रं मुञ्चापरं ते क्रीडनकं दास्यामीति तापस्या भाषिते यदा बालो हस्तं प्रासारयत्तदा तस्मिञ्जालग्रथिताङ्गुलिकरत्वरूपं चक्रवर्तिलक्षणमपि राज्ञा निरूपितम् । बालकाय वर्णचित्रितं मृत्तिकामयूरं दातुमेका तापसी गता । यदा स दुर्ललितो बालोऽपरां तापसीं नागणयत्तदा सा राजानं दृष्ट्वोवाच । भद्रमुख, एहि तावत् । मोचयानेन दुर्मोक-

हस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रमिति । राजा यथा-भ्यर्थितमनुष्ठाय बालस्पर्शमुपलभ्यात्मगतमुवाच । अनेन कस्यापि कुलाङ्कुरेण गात्रेषु स्पृष्टस्य ममेदृशं सुखम् । यस्य कृतिनोऽङ्कादयं प्ररूढस्तस्य चेतसि कां निर्वृतिं कुर्यादिति । तापसी बालं दुष्यन्तं च निर्वर्ण्याश्चर्यमाश्चर्यमिति व्याहृत्य राजानमुवाच । अस्य बालस्य रूपसंवादिनी त आकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽ-प्रतिलोमः संवृत्त इति । कोऽस्य व्यपदेश इति राज्ञा पृष्टे तापसी जगाद । पुरुवंशः । अप्सरःसम्बन्धेनास्य बालस्य जनन्यत्र देवगुरो-स्तपोवने प्रसूतेति । ततो राजा बालस्य माता किमाख्यस्य राजर्षेः पत्नीति पप्रच्छ । तापसी प्रत्युवाच । कस्तस्य धर्मदारपरित्यागिनो नाम सङ्कीर्तयितुं चिन्तयिष्यतीति । दुष्यन्तोऽचिन्तयत् । इयं कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् । अथवाऽन्याय्यः परदारव्यवहार इति । तस्मिन्नेव क्षणे मृण्मयूर-हस्ता तापसी तत्रागत्य 'सर्वदमन शकुन्तलावण्यं पश्य' इति बालमुवाच । नामसादृश्येन वञ्चितः स बालः प्रोवाच कुत्र मे मातेति । ततो दुष्यन्तो ऽचिन्तयत् । किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेय-सादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषा-दाय कल्पत इति । सिंहशावविमर्देन बालस्य मणिबन्धात्परिभ्रष्टं रक्षाकरण्डकं तापसीभ्यां प्रतिषिध्यमानोऽपि राजाऽऽददौ । प्रति-षेधकारणं पृष्टा तापसी जगाद । एषाऽपराजिता नामौषधिरस्य जात-कर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति । अथ गृह्णाति ततस्तं सर्पो भूत्वा दशतीति । तापस्यौ तं वृत्तान्तं नियमव्यापृतायै शकुन्त-

लायै निवेदयितुं निष्क्रान्ते । पुत्रकेत्युक्त्वा बालं यदा राजा परिष-स्वजे तदा तेनोक्तं मम खलु तातो दुष्यन्तो न त्वमिति । तापसी-मुखाद्वृत्तान्तं श्रुत्वा शकुन्तलैकवेणीधरा राजानमुपाजगाम । दुष्यन्तः शकुन्तलायाः पादयोः प्रणिपत्याह स्म । सुतनु तव हृदयात्प्रत्यादेश-वैक्लव्यमपैतु । मम मनसः संमोहस्तदा बलवानभूत् । प्रबलतमसां शुभेषु ह्येवंप्राया वृत्तयः । शिरसि क्षिप्तां स्रजमप्यन्धोऽहिशङ्कया धुनोतीति । शकुन्तलोवाच । उत्तिष्ठत्वार्यपुत्रः, नूनं मे सुचरित-प्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशो-ऽप्यार्यपुत्रो मयि विरसः संवृत्त इति । तदा निवृत्य मातलिर्दुष्यन्त-मुवाच । दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते । भगवान्मारीचस्ते दर्शनं वितरति । तदेह्यायुष्मन्निति । राजा सह शकुन्तलया पुत्रेण चादित्या सार्धमासनस्थं मारीचमुपगम्य प्रणनाम । सर्वे मारीचमभित उपाविशन् । मारीच एकैकं निर्दिश्योवाच । दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् । श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ इति । राजोवाच । भगवन्, प्रागभिप्रेतसि-द्धिः पश्चाद्वो दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । उदेति पूर्वं कुसुमं ततः फलम्, प्राग्घनोदयस्तदनन्तरं पयः । निमित्तनैमित्तिकयो-रयं क्रमः । तव प्रसादस्य तु पुरः सम्पदः । शकुन्तलामिमामाज्ञाकरीं वो गान्धर्वेण विवाहेनोपयम्य स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनात्तद्दुहितर-मवगतोहम् । तदेतच्चित्रमिव मे प्रतिभातीति । वत्स, अलमात्माप-चारशङ्कया, संमोहस्त्वय्युपपन्न इत्युक्त्वा मारीचस्तस्मै दुर्वासःशा-पादिकं सर्वं कथयांचकार । तच्छ्रुत्वैष वचनीयान्मुक्तोऽस्मीति राजा-

ब्रवीत् । मारीचः शकुन्तलामुवाच । वत्से चरितार्थासि । सहधर्मचारिणं प्रति न त्वया मन्युः कार्य इति । मारीचो दुष्यन्तमब्रवीत् । अस्माभिरनुष्ठितजातकर्माणमेनं पुत्रं भाविनं चक्रवर्तिनमवगच्छतु भवान् । अयं सत्त्वानां प्रसभदमनात्सर्वदमन इत्यस्मिन्नाश्रमे लब्धाभिधानो लोकानां भरणाद्भरत इत्याख्यां यास्यतीति । भगवते कण्वाय प्रियमावेदयितुं मारीचेन शिष्यः प्रहितः । मारीचो दुष्यन्तमुवाच । वत्स त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य राजधानीं प्रतिष्ठस्व । बिडौजास्तव प्रजासु प्राज्यवृष्टिर्भवतु, त्वमपि यज्ञान्वितत्य स्वर्गिणः प्रीणयेति । ततो दुष्यन्तो राजधानीं जगाम ॥

Abhijñâna–S'âkuntala.

---

## XVI.

## THE ADVICE OF BIBHÎSHAṆA TO RÂVAṆA.

ततो विनिद्रं कृतदेवतार्चमाविष्कृताङ्गप्रतिकर्मरम्यं दृष्ट्वैव चित्तप्रशमं किरन्तं बिभीषणं मातोवाच । आयुष्मन्, नाकसदामानन्दनस्त्वमतिमदोद्धतस्य जगन्ति प्रबाधमानस्य सोदरस्य विषस्यामृतमिव तूर्णं प्रशान्तिं कुरुष्व । तथा कुर्या येन रावणो विषादनीहारपरीतमूर्तिं सीतां जहाति । कुलानन्द, यावदसौ रावणो भयङ्करो विषस्य पिण्ड इव हरेण न संग्रस्यते पुरुषोत्तमेन तावद्यतस्व । जनस्थाननिवासिनः खरदूषणादयो राक्षसा निहताः, लङ्कापुरी जितभटोत्खातद्रुमा च विहिता, सद्मानि च दग्धानि, तस्मादित्थं गते सति यद्-

न्धुना विधेयं तस्मिन्घटयस्वेति । सीताप्रत्यर्पणे पूर्वमेव कृतमतिः स बिभीषण एवमतिमात्रं शुभयैव बुद्ध्या मात्रा प्रेर्यमाणश्चिरं ध्यानपरोऽभूत् । ततो बिभीषणो निशाचरैः परिरक्षितं रावणमन्दिरस्य द्वारं ययौ । प्रतीहारेण दूरादेव नतोऽनावेदितसंप्रविष्टो निशाचरैः सगौरवं दत्तपथो बिभीषणो भ्रातरं सिंहासनाधिरूढं दृष्टवान् । स विहितप्रणामः सिंहासने चारुं बाहुं निक्षिप्य किङ्करैः कल्पितं पीठमध्यास्त । ततो दशास्यः पाणिं प्रसार्य समितिं बभाषे । शक्तैर्नीतिष्वाम्नातिभिर्बुद्धिमद्भिरुपायविद्भिर्युष्मद्विधैः सार्धं सुमन्त्रितानि कार्याणि सिध्यन्ति । वालिखरादिनाशे सत्युपेक्षिते सागरमुत्तितीर्षौ द्विषां रामसुग्रीवादीनां सैन्ये यद्युक्तं तद्ब्रूतेति । प्रहस्तप्रमुखा यातुधाना भुजांसवक्षःस्थलकार्मुकासीन्गदाः शूलानि च परामृशन्तो दशास्यं प्रोचुः । अखण्ड्यमानमाखण्डलं परिखण्ड्योदीर्णदण्डस्त्वं हे नृपश्रेष्ठ नराभियोगं गुरुत्वं किं नयसि । निर्यत्स्फुलिङ्गाकुलधूमराशिं भानुं किं भूमौ पिनषाम । किं द्यौरधोऽस्तु, अथवा क्षितिरन्तरिक्षे भवतु । का वा गणना सराघवेषु वानरेषु येऽस्माकं मध्यात्कस्यचिदपि प्रातराशाय नालम् । त्वदीयैर्भृत्यैः समेधितश्चापल्ययुक्तस्य हनूमतो वालधिभाक्कृशानुर्लङ्कामधाक्षीदिति । अनन्तरं बिभीषणो यातुधानान्बभाषे । राज्ञा युद्धाय सुभृतैर्भवद्भिर्यदुक्तं तत्सम्भावनाया उचितमेव । किं तु प्रज्ञैव मन्त्रेऽधिकृता न शौर्यम् । यो जिगीषुर्वृद्धिक्षयौ प्रसमीक्षमाणः सन्ध्यादिषु गुणेषु घटते तं चञ्चलाऽपि लक्ष्मीर्न मुञ्चति । एकेन शत्रुणा सन्धिरपरेण विग्रहः कार्यः । जिगीषुर्वृद्धिं प्रसमीक्ष्याहितात्मसारं विजानन्नेता नीतीः प्रयुञ्जीत । त्वया तु लोके विरागो जनितः प्रकोपितं चेन्द्रमुख्यं विबुधमण्डलम् । रामे तु सर्वमेवैतद्विपरीतम् । यदैवैकेन शरेण वाली

निहतः सुग्रीवश्च राजा कृतस्तदैव भवतो विनष्टं कार्यम् । षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रो विगुणैरुपेतस्त्वं मा रामेण सह युद्धं कार्षीः । प्रणम तम् । रामोऽपि दाराहरणेन तप्तो हतैश्च बन्धुभिर्वयं तप्ताः, तस्माद्यथा तप्तस्यायसस्तप्तेन तथा नो रामेण सह सन्धिरस्तु । सीतां विमुञ्च । यद्यपि दण्डेन कोशेन चात्मानमरेः प्रकृष्टं मन्यसे तथापि रिक्तस्य रामस्य पूर्णेन त्वया वृथा विनाशः, पूर्णस्य तव भङ्गे तु बहु हीयते । सुनीती रामो जेतुं न शक्यते, तेन सह कलहे ध्रुवं तव विनाशः स्यात् । कपीन्द्रः सुग्रीवो भयाल्लोभाद्वा न राममभिगतो येन विभेद्यो भवेत् । सतां वर्त्मनि स्थितः सुग्रीवः प्रतिप्रियं चिकीर्षू राममभिगतः । रामेण विरोधे सति यं वयमुपाश्रयेम तं रामादधिकं तत्समं वा न कञ्चिदपि पश्यामि । स्वयंभूर्नास्माकं शरणं यतो वरं दत्त्वाऽधुनासौ सानुशयो वर्तते । इन्द्रादयश्च पूर्वतरं विरुद्धाः । तस्माद्रामेण सन्धानमस्तु । निरूप्यमाणोऽपि नान्य उपायोऽस्ति । यदि विग्रहे मतिं करिष्यसि तर्हि कपयोऽचिरेण सर्वमेतन्नाशं नेष्यन्तीति । विभीषणोक्तं बहु मन्यमानो रावणस्य मातामहो माल्यवान्नाम वार्धककम्प्रमूर्धा परिणामनम्रं देहं प्रोन्नम्य रावणमुवाच । य एकः पदातिर्धनुष्मान् वियद्गतान्यनेकमायानि चतुर्दश रक्षःसहस्राण्यार्दीत् तत्र का वो मानुषमात्रशङ्का । सन्तापितैः सदेवैर्ब्रह्मर्षिभिर्नूनं रात्रिंचरक्षयाय नराकृतिर्वानरसैन्यशाली जगत्यजय्योऽभ्युपायो विहितः । प्रमादवान् क्षतधर्मवर्त्मा मुनीनामपि शत्रुभावं गतस्त्वं चेत्स्वकुलस्य शान्तिं बहु मन्यसे तर्हि विभीषणोक्तं कुरुष्वेति । तेन प्रहस्तादिघोषेण प्रतिलब्धसंज्ञो निद्राविलाक्षः श्रुतकार्यसारः कुम्भकर्णस्ततो मेघ इव साम्बुरन्तरिक्षे वाक्यमभाषत । मध्यगतोऽपि

भानुरौष्ण्यं त्यजेदथवा हिमांशुर्निशायां शैत्यं त्यजेन्न पुनः पौलस्त्यो भुवनावमानी सर्वानर्थमूलं मानं त्यजेदिति मन्ये । तथापि यद्विधाः सिद्धिमभीप्सवस्त्वां विलोमचेष्टं प्रसभं वक्तुं यतन्ते तत्स्नेहमूलम् । क्रूराः क्रिया ग्राम्यसुखेषु सङ्ग इति यो वृद्धैः पुण्यस्य संक्षयहेतुरुक्तोऽसौ भवताऽतिमात्रं निषेवितः । तस्य फलमचिरादेव लप्स्यसे । त्वत्प्रसादेन मया किं नोपभुक्तम् । तस्मादित्थं कृतार्थस्य मम यदि त्वदर्थे मृत्युः स्यात्तदा मम जन्म सफलं भवेदिति । एवमुक्त्वा प्रसुप्ते कुम्भकर्णे बिभीषणो राक्षसेन्द्रं पुनरुवाच । विपरीतानि निमित्तानि दृश्यन्ते । असौ विवस्वानुत्पातजं वक्त्राकृति च्छिद्रं व्यादाय धूसररश्मिराशिर्जनानत्तुं कीर्णसटः सिंह इवाभ्युदेति । क्ष्मां कम्पयन्त्यश्चोल्का निपतन्ति । शृगालादयो रुवन्तः परितो नो भ्राम्यन्ति । यस्मादेवं विनाशसूचकानि निमित्तानि तस्मात्त्वं सीतां प्रत्यर्प्य रामेण सह सन्धिं कुर्विति । दशाननो भीषणरूक्षचक्षुर्भ्रूभङ्गमाधायोग्रपदां गिरं बिभीषणं जगाद । उदके शिलातरणं, रवेर्ध्वान्तस्यन्दः, इन्दोर्वह्निनिसृतिः, विजिगीषोर्मम परेणापजय इत्येतानि चत्वारि तुल्यानि । ज्ञातय आत्मनोऽपि क्षयमिच्छन्ति न पुनस्तुल्यकुलस्य लक्ष्मीम्, तथा च शत्रून्नमन्ति न च सन्तप्यमानैर्हृदयैर्बन्धुवृद्धिं सहन्ते । त्वयाद्य लङ्काभिभवेऽतिहर्षादतिमात्रं दुष्टोऽन्तरात्मा विवृतः । धिक्त्वामिति । इदं वदन्रावणस्तस्य शिरसि पार्ष्णिं ददौ । ततो बिभीषणो रोषं क्षमया मन्युं धैर्येण गर्वं विनयेन मोहं धिया निगृह्णन्समं चतुर्भिः सचिवैरुदतिष्ठत् । रावणं चोवाच । महाराज मया विना सुखमास्स्व । यन्मूर्ख आतुरः पथ्यकटूननश्नन्सामयो भवति स किं भिषजां दोषः । यो विवेकशून्य आत्ममानी प्रभुः स्फुटमुच्यमानो वैरं करोति

श्रोत्रसुखैरपथ्यैश्च प्रतुष्यति स सुहृदां महतेऽनर्थाय भवति। धर्म्ये पथि स्थितस्य मे पादेन योऽयं भवता प्रहारो दत्तः स कस्य लाघवमादधातु तत् सह मन्त्रिमुख्यैस्त्वया चिन्तनीयमिति। एवं रजनीचरपतिमुक्त्वा बिभीषणो लङ्काया निरगच्छत्॥

Bhaṭṭikâvya.

---

## XVII.

## RAGHU'S CONQUEST OF INDIA.

अथ सरितो गाधाः कुर्वती पथश्चाश्यानकर्दमान् विदधाना शरद्रघुं यात्रायै नोदयामास। वाजिनीराजनाविधौ सम्यग् हुतो वह्निस्तस्मै प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ। यदा रघुर्बलमादाय दिग्जिगीषया प्रतस्थे तदा मन्दरोद्धूतैः पृषतैः क्षीरसागरोर्मयोऽच्युतमिव तं वयोवृद्धाः पौरयोषितो लाजैरवाकिरन्। अनिलोद्धूतैः केतुभिरहितांस्तर्जयन्निव स प्रथमं प्राचीं ययौ। पूर्वसागरगामिनीं महतीं सेनां कर्षन्रघुर्हरजटाभ्रष्टां गङ्गां नयन्भगीरथ इव बभौ। पौरस्त्याञ्जनपदानाक्रामञ्जयी रघुस्तालीवनश्यामं महोदधेरुपकण्ठं प्राप। अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव सुह्मैर्वैतसीं वृत्तिमाश्रित्यात्मा संरक्षितः। नेता रघुर्नौसाधनोद्यतान्वङ्गांस्तरसोत्खाय गङ्गास्रोतोऽन्तरेषु जयस्तम्भान्निचखान। ते वङ्गा आपादपद्मप्रणता उत्खातप्रतिरोपिताः कलमा इव रघुं फलैः संवर्धयामासुः। बद्धद्विरदसेतुभिः सैन्यैः कपिशां नाम नदीं तीर्त्वोत्कलादर्शितमार्गः कलिङ्गाभिमुखो ययौ। पक्षच्छेदोद्यतं शक्रं शिलावर्षी पर्वत इव तं गजसाधनः कलिङ्गोऽस्त्रैः प्रतिजग्राह। महेन्द्रपर्वते द्विषां नाराचदुर्दिनं विषह्य सन्मङ्गलस्नात इव रघुर्जयश्रियं प्रतिपेदे। रचितापान-

भूमयो योधा नारिकेलासवं ताम्बूलीनां दलैः शात्रवं च यशः पपौ। धर्मविजयी रघुर्गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रियं जहार न तु मेदिनीम्। ततः फलवत्पूगमालिना वेलातटेनैवागस्त्याचरितामाशां रघुर्ययौ। विजिगीषोर्गताध्वनस्तस्य बलैरध्युषिता मलयाद्रेरुपत्यका मारीचोद्भ्रान्तहारीता बभूवुः। अश्वक्षुण्णानामेलानामुत्पतिष्णवः फलरेणवस्तुल्यगन्धेषु मत्तेभकटेषु ससञ्जुः। दक्षिणस्यां दिशि रवेरपि तेजो मन्दायते तस्यामेव तु रघोः प्रतापं पाण्ड्या न विषेहिरे। ताम्रपर्णीसमेतस्य महोदधेः सञ्चितं मुक्तासारं स्वं यश इव ते पादयोर्निपत्य तस्मै ददुः। तटेष्वालीनचन्दनौ मलयदर्दुरौ दक्षिणस्यां दिशि वर्तमानौ गिरी यथाकामं निर्विश्यासह्यविक्रमो रघुरुदन्वता दूरान्मुक्तं सह्यं पर्वतमलङ्घयत्। अपरान्तजयोद्यतैर्विसर्पद्भिस्तस्यानीकैः परशुरामास्त्रोत्सारितोऽप्यर्णवः सह्यलग्न इवासीत्। भयोत्सृष्टविभूषाणां केरलयोषितामलकेषु तेन चमूरेणुश्चूर्णप्रतिनिधीकृतः। चरतां वाहानां गात्रसञ्जितैर्वर्मभिः पवनोद्धूतराजतालीवनध्वनिरभ्यभूयत। खर्जूरीस्कन्धनद्धानां करिणां मदोद्गारसुगन्धिषु कटेषु पुन्नागेभ्यः शिलीमुखाः पेतुः। उदन्वान्किलाभ्यर्थितः सन्परशुरामायावकाशं ददौ रघवे पुनरपरान्तमहीपालव्याजेन करं ददौ। इन्द्रियाख्यान्रिपूंस्तत्त्वज्ञानेन संयमीव रघुस्ततः पारसीकाञ्जेतुं स्थलवर्त्मना प्रतस्थे। अश्वसाधनैः पाश्चात्त्यैः शार्ङ्गकूजितविज्ञेयप्रतियोधे रजसि तस्य तुमुलः संग्रामोऽभवत्। सरघाव्याप्तैः क्षौद्रपटलैरिव भल्लापवर्जितैः श्मश्रुलैः पारसीकानां शिरोभिः स महीं तस्तार। शेषा अपनीतशिरस्त्राणास्तं शरणं ययुः। महात्मनां हि संरम्भः प्रणिपातप्रतीकारः। आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु तद्योधा विजय-

श्रमं मधुभिर्विनयन्ते स्म । उस्रै रसानुद्धरिष्यन्भास्वानिव शनैरुदीच्यानुद्धरिष्यन्रघुस्ततः कौबेरीं दिशं प्रतस्थे । सिन्धुतीरविचेष्टनैर्विनीताध्वश्रमास्तस्य वाजिनो लग्नकुङ्कुमकेसरान्स्कन्धान्दुधुवुः । तस्य वीर्यं समरे सोढुमनीश्वराः काम्बोजा गजालानपरिक्लिष्टैरक्षोटैः सार्धमानता बभूवुः । काम्बोजानां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः कोशलेश्वरं रघुमुपदा विविशुर्न पुनरुत्सेकाः । ततोऽश्वसाधनो गौरीगुरुं शैलमारुरोह । भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवो गङ्गाशीकरिणो मरुतस्तं मार्ग सिषेविरे । विषण्णमृगनाभिभिर्वासितोत्सङ्गा दृशदाऽध्यास्य रघोः सैनिका नमेरूणां छायासु विशश्रमुः । तत्र रघोः पर्वतीयैर्गणैर्नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलं घोरं जन्यमभूत् । शरैरुत्सवसङ्केतान् विरतोत्सवान्कृत्वा किन्नरान् बाहोर्जयोदाहरणं गापयामास । हिमवति यशोराशिमक्षोभ्यं निवेश्य रघुरवरुरोह । तीर्णलौहित्ये रघौ तद्गजालानतां प्राप्तैः कालागुरुद्रुमैः सह प्राग्ज्योतिषेश्वरश्चकम्पे । रुद्धार्कमधारावर्षदुर्दिनं रघो रथवर्त्मरजोऽपि प्राग्ज्योतिषेश्वरो न प्रसेहे कुत एव पताकिनीम् । यैरन्यान्नृपानुपरुरोध तैर्भिन्नकटैर्नागैः कामरूपाणामीशोऽत्याखण्डलविक्रमं तं भेजे । एवं दिशो जित्वा रघू रथोद्धतं रजो राज्ञां छत्रशून्येषु मौलिषु विश्रामयन्न्यवर्तत । ततश्च स विश्वजितं नाम सर्वस्वदक्षिणं यज्ञमाजह्रे । वारिमुचामिव सतां ह्यादानं विसर्गायैव ॥

Raghuvamśa IV.

---

## XVIII.

## THE BENEVOLENCE OF BUDDHA.

बोधिसत्त्वः किलायं भगवान्भूतः स्वधर्माभिरतिपरे महति ब्राह्म-

णकुले जन्मपरिग्रहं चकार । स कृतजातकर्मादिसंस्कारः प्रकृतिमेधावित्वाज्ज्ञानकौतूहलादकौसीद्याच्च नचिरेणैवाष्टादशसु विद्यास्थानेषु स्वकुलक्रमाविरुद्धासु च सर्वासु कलास्वाचार्यकं पदमवाप । तस्य भाग्यगुणातिशयसमावर्धितो महाँल्लाभसत्कारयशोविशेषः प्रादुरभूत् । धर्माभ्यासभावितमतिः कृतप्रव्रज्यापरिचयस्तु बोधिसत्त्वो न तेनाभिरेमे । स कामेषु बहुदोषजातं दृष्ट्वा गार्हस्थ्यमस्वास्थ्यमिवावधूय कञ्चिद्वनप्रस्थमलञ्चकार । तस्य मैत्रीमयेन प्रशमेनानुपरीतचित्ता व्यालमृगादयः परस्परद्रोहनिवृत्तभावास्तपस्विवद्विचेरुः । तं प्रव्रजितं श्रुत्वा तदीयैर्गुणैरवबद्धचित्ता मनुष्या बन्धून्परिग्रहांश्च विहाय तच्छिष्यतामुपजग्मुः । अथ कदाचित्स महात्मा शिष्यगणे कल्याणे वर्त्मनि प्रतिष्ठापिते नैष्कर्म्यसत्पथमवतारिते च तत्र शिष्येणाजितेनानुगम्यमानो योगानुकूलान्पर्वतदरीनिकुञ्जाननुविचचार । गिरिगह्वरे प्रसूतिक्लेशैर्मन्दतां गतां परिक्षामेक्षणां क्षुधा शातोदरीं सद्योजातान्बालानप्याहारमिव पश्यन्तीं व्याघ्रवनितां ददर्श । बोधिसत्त्वस्तु तां दृष्ट्वा महीकम्पादद्रिराडिव करुणावशाच्चकम्पे । अथ स बोधिसत्त्वः ससंभ्रममाम्रेडितपदं स्वभावातिशयव्यञ्जकं करुणाबलसमाहिताक्षरं शिष्यमुवाच । वत्स वत्स, पश्य संसारनैर्गुण्यं यदेषा व्याघ्री क्षुधा लङ्घितस्नेहमर्यादा स्वशावकानपि भोक्तुमिच्छति । अहो बतातिरौद्रोऽयमात्मस्नेहो येन माताऽपि तनयान्भक्षयितुमिच्छति । तच्छीघ्रमन्विष्यतां कुतश्चिदस्याः क्षुत्प्रतीकारहेतुर्यावन्न तनयानात्मानं चोपहन्ति । अहमपि च प्रयतिष्ये साहसादस्मादेनां निवारयितुमिति । तथेति प्रतिश्रुत्य स प्रक्रान्तस्तदाहारान्वेषणपरो बभूव । अथ बोधिसत्त्वस्तं शिष्यमेवं सव्यपदेशमतिवाह्य चिन्तामापेदे ।

सकलेऽपि शरीरे विद्यमाने किमित्यहं परस्मान्मांसं मृगये । न स विचक्षणो यो मेदिनि सारहीने दुःखमये सतताशुचौ च देहे परस्मा उपयुज्यमाने प्रीतिमान्न स्यात् । तस्मात्तटप्रपातोद्गतजीवितेन शरीरेण व्याघ्र्याः पुत्रवधात् तस्याः सकाशाच्च शावकानां संरक्षणं करिष्यामि । कदा नु स्वगात्रैरपि परेषां हितं कुर्यामिति यो मे मनोरथोऽभूत्सोऽधुना सफलीभवेदिति । एवं स निश्चित्य परार्थसिद्धौ प्राणात्ययेऽपि सञ्जातप्रमोदो देवतानां मनांस्यपि विस्माययन्स्वां तनुमुत्ससर्ज । अथ सा व्याघ्री बोधिसत्त्वशरीरनिपातशब्देन समुत्थापितकौतूहला विरम्य स्वतनयवैशसोद्यमात्तस्यां दिशि नयने चिक्षेप । दृष्ट्वैव च बोधिसत्त्वशरीरमुद्गतप्राणं सहसाभिसृत्य भक्षयितुमुपचक्रमे । अथ स तस्य शिष्यो मांसमनासाद्यैव प्रतिनिवृत्तः कुत्रोपाध्याय इति विलोकयंस्तद्बोधिसत्त्वशरीरमुद्गतप्राणं तया व्याघ्र्या भक्ष्यमाणं ददर्श । स तत्कर्मातिशयविस्मयात्प्रतिव्यूढशोकदुःखावेग आत्मगतमिदमुवाच । अहोऽस्य महात्मनो व्यसनातुरे जने दया स्वसौख्यनिःसङ्गता च । सर्वथा नमोस्त्वस्मै महाभागाय सर्वभूतशरण्यायातिविपुलकारुण्यायाप्रमेयसत्त्वाय भूतार्थबोधिसत्त्वायेति । अथ स तमर्थं सब्रह्मचारिभ्यो निवेदयामास । तत्कर्मविस्मितमुखैस्तस्य शिष्यैर्गन्धर्वयक्षभुजगादिभिर्माल्याम्बराभरणचन्दनचूर्णवर्षैश्छन्ना तदस्थिवसुधा वसुधेति सार्थं नामोवाह ॥

Jâtakamâlâ.

---

# XIX.

# THE MEETING OF SO'MADATTA AND RÂJAVÂHANA.

देव, भवच्चरणकमलसेवाभिलाषी भ्रमन्नेकस्यां वनावनौ पिपासाकुलोऽहं लतापरिवृतं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम् । तदादाय गत्वा कंचनाध्वानमम्बरमणेरत्युष्णतया गन्तुमक्षमो वनेऽस्मिन्नेव किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुशलमुदितदयोऽहमपृच्छम् । कार्पण्यविवर्णवदनो महाशापूर्णमानसोऽवोचदग्रजन्मा 'सुतानेतान्मातृहीनाननेकैरुपायै रक्षन्निदानीमस्मिन्कुदेशे भैक्षं सम्पाद्य ददद्देतेभ्यो वसामि शिवालयेऽस्मिन्' इति । 'भूदेव, एतत्कटकाधिपती राजा कस्य देशस्य, किंनामधेयः, किमत्रागमनकारणमस्य' इति मया पृष्टोऽभाषत महीसुरः । 'सौम्य मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावं श्रावमवधूतदुहितृप्रार्थनस्य तस्य नगरीमरौत्सीत् । वीरकेतुरपि भीतो महदुपायनमिव तनयां मत्तकालायादात् । तरुणीलाभहृष्टचेता लाटपतिः परिणेया निजपुर एवति निश्चित्य गच्छन्निजदेशं प्रति संप्रति मृगयादरेणात्र वने सैन्यवासमकारयत् । मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबलसमन्वितोऽप्यत्र रचितशिविरस्तं निजनाथावमानखिन्नमानसोऽन्तर्बिभेद' इति । विप्रोऽसौ बहुतनयो विद्वान्निर्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम् । परमाह्लादविकसिताननोऽभिहितानेकाशीः कुत्रचिदग्रजन्मा जगाम । अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखम् ।

तदनु पश्चान्निगडितबाहुयुगलः स भूसुरः कशाघातचिह्नितगात्रो-ऽनेकैर्नैस्त्रिंशिकानुयातोऽभ्येत्य मामसौ दस्युरित्यदर्शयत् । परित्यक्तभूसुरा राजभटा रत्नावाप्तिप्रकारं मदुक्तमनाकर्ण्य भयरहितं मां गाढं नियम्य रज्जुभिरानीय कारागारमेते तव सखाय इति निगडितान्कांश्चिन्निर्दिष्टवन्तो मामपि निगडितचरणयुगलमकार्षुः । किंकर्तव्यतामूढेनावोचि मया । 'ननु पुरुषा वीर्यपरुषाः, निमित्तेन केन निर्विशथ कारावासदुःखं दुस्तरम्, यूयं वयस्या इति निर्दिष्टमेतैः, किमिदम्' इति । तथाविधं मामवेक्ष्य भूसुरान्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चोरवीराः पुनरब्रुवन् । 'वीरकेतुमन्त्रिणो मानपालस्य किंकरा वयम् । तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गाद्वारेण तदगारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनमपहृत्य महाटवीं प्राविशाम । अपरेद्युश्च पदान्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयानस्मान्परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय समस्तवस्तुशोधनवेलायामेकस्यानर्घ्यरत्नस्याभावेनास्मद्वधाय माणिक्यादानायास्मिन्किलाश्रृंखलयन्' इति । श्रुतरत्नरत्नावलोकनस्थानोऽहमिदं तदेव माणिक्यमिति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाभाष्य समयोचितैः संलापैर्मैत्रीमकार्षम् । ततोऽर्धरात्रे तेषां मम च श्रृङ्खलाबन्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगणस्यायुधजालमादाय पुररक्षान्पुरतोऽभिमुखागतान्पटुपराक्रमलीलयाभिद्राव्य मानपालशिबिरं प्राविशम् । मानपालो निजभृत्येभ्यो मम कुलाभिमानवृत्तान्तं तत्कालीनं विक्रमं च निशम्य मामार्चयत् । परेद्युर्मत्तकालेन प्रेषिताः केचन पुरुषा मानपालमुपेत्य, मन्त्रिन् मदीयराजमन्दिरे सुरङ्गया बहुधनमपहृत्य चोरवीरा भवदीयं

-कटकं प्राविशन्, तानर्पय नो चेन्महाननर्थः सम्भविष्यति' इति क्रूरतरं वाक्यमब्रुवन्। तदाकर्ण्य रोषारक्तनेत्रो मन्त्री, 'लाटपतिः कः, तेन मैत्री का, किं पुनरस्य वराकस्य सेवया लभ्यम्' इति तान्निरभर्त्सयत। ते च मानपालोक्तं विप्रलापं मत्तपालाय तथैवाकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात्। पूर्वमेव कृत-रणनिश्चयो मानी मानपालः संनद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात्। अहमपि बहुलतुरङ्गमोपेतं चतुरसारथिं रथं दृढतरं कवचं मदनुरूपं चापं विविधबाणपूर्णं तूणीरद्वयं सबहुमानं मन्त्रिदत्ता-नि रणसमुचितान्यायुधानि गृहीत्वा युद्धसंनद्धो मदीयबलविश्वा-सेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम्। परस्परमत्सरेण तुमुलसङ्गरक-रमुभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे मुञ्चन्नराती-न्प्राहरम्। ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेत-तदीयरथोऽहमरातेः शिरोऽकृन्तम्। तस्मिन्पतिते तदवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातमादाय परमानन्दसम्भृतो मन्त्री ममानेकविधां सम्भावनामकार्षीत्। मानपालप्रेषितात्तदनुचरादेनमखि-लमुदन्तमाकर्ण्य सन्तुष्टमना राजाऽभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यमदात्। ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहीपालचित्तो वामलोच-नयानया सह नानाविधं सौख्यमनुभवन् भवद्विरहवेदनाशल्यविकल-हृदयः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः परमेश्वरस्याराधनायाद्य पत्नीसमेतः समागतोऽस्मि। भक्तवत्सलस्य गौरीपतेः कारुण्येन भवत्पदारविन्दसन्दर्शनानन्दसन्दोहो मया लब्ध इति।

तन्निशम्याभिनन्दितपराक्रमो राजवाहनस्तन्निरपराधदण्डे दैवमुपालभ्य तस्मै क्रमेणात्मचरितं कथयामास ॥

Das'a-kumára-charita.

---

## XX.

## THE MEETING OF HARSHA AND HIS FATHER, WHEN THE LATTER WAS ON HIS DEATH-BED.

अवनिपतिस्तु दूरादेव दृष्ट्वातिदायितं तनयं हर्षं तदवस्थोऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ, एह्येहीत्याह्वयञ्शरीरार्धेन शयनादुदगात् । ससंभ्रममुपसृतं चैनं विनयावनम्रमुन्नमय्य बलादुरसि निवेश्य, विशन्निव प्रेम्णा निशाकरमण्डलमध्यम्, अभिषिच्यमान इव तुषाराद्रिद्रवेण, पीडयन्नङ्गैरङ्गानि, कपोलेन कपोलमवघट्टयन् विस्मृतज्वरसंज्वरः सुचिरमालिलिङ्ग । कथं कथमपि चिराद्विमुक्तमुपसृत्य कृतनमस्कारं प्रणतजननीकमुपागतमासीनं च शयनान्तिके पिबन्निव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत् । पस्पर्श च पुनः पुनर्वेपथुमता पाणितलेन क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीद्वत्स कृशोऽसीति । सुहृद् भण्डिस्त्वकथयत् । देव तृतीयमहः कृताहारस्यास्याद्येति ।

तच्छ्रुत्वा बाष्पवेगगृह्यमाणाक्षरं कथं कथमप्यायतं निःश्वस्योवाच । 'वत्स हर्ष जानामि त्वां पितृप्रियमतिमृदुहृदयम् । अतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी । अतो नार्हस्यात्मानं शुचे दातुम् । उद्दामदाहज्वरदग्धोऽपि दह्ये खल्वहमधिकतरमनेनायुष्मदाधिना । निशितमिव शस्त्रं तक्ष्णोति मां त्वदीयस्तनिमा । सुखं च राज्यं च वंशश्च

प्राणाश्च त्वयि मे स्थितानि । यथा मम तथा सर्वासां प्रजानाम् । त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलम् । न ह्यल्पपुण्य-भाजां वंशमलङ्कुर्वन्ति भवादृशाः । फलमस्यनेकजन्मान्तरोपार्जि-तस्याकलुषस्य कर्मणः । करतलगतमिव कथयन्ति चतुर्णामप्यर्ण-वानामाधिपत्यं ते लक्षणानि । त्वज्जन्मनैव कृतार्थोऽस्मि । निरभि-लाषोऽस्मि जीवितव्ये । भिषगनुरोधः पाययति मामौषधम् । अपि च सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थमुत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ । प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञा-तिभिः । तदुत्तिष्ठ । कुरु सर्वाः पुनरेव क्रियाः । कृताहारे च त्वयि स्वयमहमप्युपयोक्ष्ये पथ्यम्' इत्येवमभिहितस्य चास्य धक्ष्यन्निव हृदयम-तितरां शोकानलः सन्दुधुक्षे । क्षणमात्रं च स्थित्वा पित्रा पुनरा-हारार्थमादिश्यमानो हर्षो धवलगृहादवततार । चकार च चेतसि । अकाण्डे खल्वयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः । किमत्र करवाणीति ।

Harsha-charita.

---

## XXI.

## A QUEEN BURNS HERSELF ON HER HUSBAND'S DEATH.

प्रतीहारीमुखान्मातरमनलप्रवेशोद्यतां श्रुत्वा हर्षः सत्वरमन्तःपुरं प्रविश्य दूरादेव च बाष्पायमाणदृष्टिरभ्यधात् । 'अम्ब, त्वमपि मां मन्दपुण्यं त्यजसि । प्रसाद । निवर्तस्व' इति । एवमभिदधान एव च सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडश्चरणयोर्न्यपतत् । देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि

प्रेयसि तनये गुरुणा गिरिणेवोद्वेगवेगेनावष्टभ्यमाना, स्नेहसम्भारेण निर्भराविर्भूतेनाभिभूयमाना कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पतनम्। मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत्। प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतम्। तद्वदनविनिहितनिभृत-नयनयुगला चिरं स्थित्वा पुनः पुनरायतं निश्वस्यावादीत्। 'वत्स नासि न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येनैव सह त्वया पीतं मे हृदयम्। अस्मिंश्च व्यसने प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च पुत्रक, पुरुषान्तरविलोकनव्यसनिनी राज्योपकरण-मकरुणा वा नास्मि लक्ष्मीः क्षमा वा, कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता। किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केशरिणीं गृहिणीम्। वीरजा वीर-जाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्। एवंविधेन पित्रा ते भरतभगीरथनाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः। आसेवितः सेवासंभ्रान्तानन्तसामन्तसीमन्तिनी-समावर्जितजाम्बूनदघटाभिषेकः शिरसा। लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। सपत्नीनां शिरःसु निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्चितं चरणयुगलकम्। युष्मद्विधैः पुत्रैः सनाथीकृत उत्सङ्गः। एवं कृतार्थसर्वावयवा किमपरमपेक्षे क्षीणपुण्या। मर्तुमविधवैव वाञ्छामि। न च शक्नोमि दग्धस्य भर्तुरार्यपुत्रविरहिता रतिरिव निरर्थकान्प्रलपान्कर्तुम्। प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च किं मे धक्ष्यति धूमध्वजः। मरणाच्च मे जीवितमेवास्मिन्समये साहसम्। अतिशीतलः पतिशोकानलाद-क्षयस्नेहेन्धनादस्मादनलः। कैलासकल्पे प्रवसति जीवेश्वरे जरत्तृण-

कणिकालघीयसि जीविते लोभ इति क्व घटते। अपि च जीवन्तीमपि मां नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र पुत्रराज्यसुखानि। दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति। तदहमेव त्वां तावत्तात प्रसादयामि, न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि' इत्युक्त्वा सुतस्य हर्षस्य पादयोरपतत्।

स तु ससंभ्रममपनीय चरणयुगलमवनमिततनुरुभयकरविधृतवपुषमवनिगतशिरसमुदनमयन्मातरम्। दुर्निवारतां च मातुः शुचः समवधार्य कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियां कृतनिश्चयां च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत्।

अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम्। देव्यपि यशोवती परिष्वज्य समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेव चान्तःपुरात्पौराक्रन्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरिवार्चयित्वा मूर्तिरैन्दवी भगवन्तं भानुगन्तमिव चित्रभानुं प्राविशत्। हर्षोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्॥

Harsha-Charita.

---

## XXII.

## A DESCRIPTION OF EVENING.

अनेन समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभि-

रूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपस्तनिमानमभ-
जत् । उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतपादपा-
टलरागो रविरम्बरतलादवालम्बत । आलोहितांशुजालं जलशयन-
मध्यगतस्य मधुरिपोर्विगलन्मधुधारमिव नाभिनलिनं प्रतिमागतम-
पराणवे सूर्यमण्डलमलक्ष्यत । विहायाम्बरतलमुन्मुच्य च कमलिनी-
वनानि शकुनय इव दिवसावसाने तरुशिखरेषु पर्वताग्रेषु च रवि-
किरणाः स्थितिमकुर्वत । अस्तमुपगते च भगवति सहस्रदीधिताव-
पराणवतलादुल्लसन्ती विद्रुमलतेव पाटला सन्ध्या समदृश्यत ।
यस्यामावध्यमानध्यानम्, एकदेशदुह्यमानहोमधेनुदुग्धधाराध्वनितम-
नोहरम्, अग्निवेदिविकीर्यमाणहरित्कुशम्, ऋषिकुमारिकाभिरितस्ततो
विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत् । अचिरप्रोषिते
सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलप-
रिधाना मृणालधवलयज्ञोपवीतिनी मधुकरमण्डलाक्षवलयमुद्वहन्ती
कमलिनी दिनपतिसमागमव्रतमिवाचरत् । अपरसागराम्भसि पतिते
दिवसकरे वेगोत्थितमम्भःसीकरनिकरमिव तारागणमम्बरमधारयत् ।
क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः
क्षाल्यमान इवागलदखिलः संध्यारागः । क्षयमुपगतायां सन्ध्यायां
तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवम-
वहत् । अपहाय मुनिहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत् ।
क्रमेण च रविरस्तं गत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूल-
वल्कलधवलाम्बरो गगनतलमध्यातिष्ठदमृतदीधितिः । चन्द्राभरण-
भृतस्तारकाकपालशकलालङ्कृतादम्बरतलात् त्र्यम्बकोत्तमाङ्गादिव गङ्गा
सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि

विकचपुण्डरीकसिते चन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवादृश्यत हरिणः । विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत । शनैः शनैश्च दूरोदिते भगवति हिमततिस्रुति सुधाधूलीपटलेनेव धवलीकृते चन्द्रातपेन जगति विघटमानकुमुदवनकषायपरिमला अनिलाः शीतलस्पर्शा ववुः ॥

Kádambarî.

---

## XXIII.
## THE ARRIVAL OF CHANDRA'PI'ḌA AFTER FINISHING HIS EDUCATION.

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसमग्रकलाविज्ञानमधीताशेषविद्यं चावगम्यानुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृतमतिप्रशस्तेऽहनि प्राहिणोत् । स गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य क्षितितलावलम्बितचूडामणिना शिरसा प्रणम्य राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत् । स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्यजिज्ञपत् । "कुमार, महाराजः समाज्ञापयति । 'पूर्णा नो मनोरथाः । अधीतानि शास्त्राणि । शिक्षिताः सकलाः कलाः । गतः सर्वास्वायुधविद्यासु परां प्रतिष्ठाम् । अनुमतोऽसि विनिर्गमाय विद्यागृहात्सर्वाचार्यैः । व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि । दर्शनं प्रति ते समुत्सुका-

न्यतीवान्तःपुराणि । अयमत्र दशमः संवत्सरो भवतो विद्यागृहमाधिव-
सतः । प्रविष्टोऽसि षष्ठमनुभवन्वर्षम् । एवं सम्पिण्डितेनामुना षोडशेन
प्रवर्धसे । तदद्यप्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलमातृ-
भ्योऽभिवाद्य च गुरूनपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि
नवयौवनललितानि च । संमानय राजलोकम् । पूजय द्विजातीन् ।
परिपालय प्रजाः । आनन्दय बन्धुवर्गम् ।' अयं च त्रिभुवनैकरत्नमि-
न्द्रायुधनामा तुरङ्गमोऽनिलगरुडसमजवः प्रेषितो महाराजेन द्वारि
तिष्ठति । एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति
कृत्वा 'जलधिजलादुत्थितमिदमश्वरत्नमासादितं मया महाराजाधि-
रोहणयोग्यम्' इति सन्दिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षण-
विद्भिः । 'देव, यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि तैरयमुपेतः ।
नैवंविधो भूतो भावी वा तुरङ्गमः' इति । तदयमनुगृह्यतामधिरोह-
णेन । इदं च मूर्धाभिषिक्तपार्थिवकुलप्रसूतानां विनयोपपन्नानां शूरा-
णामभिरूपाणां कलावतां च कुलक्रमागतानां राजपुत्राणां सहस्रं
परिचारार्थमनुप्रेषितं तुरङ्गमाधिरूढं द्वारि प्रणामलालसं प्रतिपालय-
ति" इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि
कृत्वा नवजलधरध्वानगम्भीरया गिरा प्रवेश्यतामिन्द्रायुध इति नि-
र्जिगमिषुरादिदेश । अथ वचनानन्तरमेव प्रवेशितमुभयतः खलीन-
कटकावलम्नाभ्यां पदे पदे कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवकृष्यमा-
णमतिप्रमाणमिन्द्रायुधमद्राक्षीत् । दृष्ट्वा च तमदृष्टपूर्वममानुषलोको-
चिताकारमखिलत्रिभुवनराज्योचितमशेषलक्षणोपपन्नमश्वरूपातिशयम-
तिधीरप्रकृतिरपि चन्द्रापीडो विस्मितहृदयो बभूव । आसी-
च्चास्य मनसि । 'मन्ये भगवतो नारायणस्य चक्षुर्गोचरमियता कालेन

नायमुपगतो येनाद्यापि तां गरुडारोहणव्यसनितां न त्यजति । अति-तेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिर्यत्सत्यमारोहणे शङ्कामिव मे जनयति । न हि सामान्यवाजिनाममानुषलोकोचिताः सकलत्रिभुवनविस्मयजनन्य ईदृश्यो भवन्त्याकृतयः । दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीराणि शापवचनोपनीतान्येतानि शरीरान्तराण्यध्यासत एव । श्रूयते हि पुरा किल स्थूलशिरा नाम महातपा मुनिरखिलत्रिभुवनललामभूतामप्सरसं रम्भाभिधानां शशाप । सा सुरलोकमपहायाश्वहृदये निवेश्यात्मानमश्वहृदयेति विख्याता वडवा मृत्तिकावत्यां नगर्यां शतधन्वानं नाम राजानमुपसेवमाना मर्त्यलोके महान्तं कालमुवास । अन्ये च महात्मानो मुनिजनशापपरिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम् । असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम् । आवेदयतीव मदन्तःकरणमस्य दिव्यताम्' इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत् । तं तुरङ्गमुपसृत्य 'महात्मन्नर्वन् योऽसि सोऽसि नमोऽस्तु ते, सर्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम्, अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति' इत्यामन्त्रयांबभूव । विदिताभिप्राय इव स तमिन्द्रायुधश्चटुलशिरःकेसरसटाहत्याकूणिताकेकरतारकेण तिर्यक्चक्षुषा विलोक्य मुहुर्मुहुस्ताडयता क्षितितलं दक्षिणखुरेणाह्वयन्निवारोहणाय हेषारवमकरोत् । मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इवेन्द्रायुधमारुरोह चन्द्रापीडः । समारुह्य तं प्रादेशमात्रमिव त्रैलोक्यमखिलं मन्यमानोऽदृष्टपर्यन्तमश्वसैन्यमपश्यत् । तच्च सागरजलमिव चन्द्रोदयेन चन्द्रापीडनिर्गमेन सकलमेव सञ्चचालाश्वीयम् । अहमहमिकया च प्रणामलालसाः सरभसापनीतातपत्रशून्यशिरसो राजपुत्रास्तं पर्यवारयन्त ।

एकैकशश्च प्रतिनामग्राहमावेद्यमाना बलाहकेन दूरावनतैः शिरोभिः प्रणेमुः । चन्द्रापीडस्तु तान्सर्वान्मानयित्वा यथोचितमनन्तरं तुरङ्गमाधिरूढेनानुगम्यमानो वैशम्पायनेन, अतिमहता कार्तस्वरदण्डेन ध्रियमाणेनातपत्रेण निवारितातपः स्तूयमानो बन्दिजनेन नगराभिमुखं प्रतस्थे ॥

Kádambari.

---

## XXVI.

## CHANDRA'PI'DA LOSES HIS WAY IN PURSUING A PAIR OF KINNARAS.

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतो विचरन्कानने शैलशिखरादवतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत् । अपूर्वतया च समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पिततुरगः समुपसर्पन्, अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च तत्पलायमानमनुसरन्ननवरतपाणिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेनैकाकी निर्गत्य बलसमूहात्सुदूरमनुससार । अत्र गृह्यते, इदं गृहीतम्, इदं गृहीतमिति रभसाकृष्टचेता महाजवतया तुरङ्गमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम । तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह । आरूढे च तस्मिञ्शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम्, अचलशिखरप्रस्तरप्रतिहतगतिप्रसरो विधृततुरङ्गश्चन्द्रापीडस्तस्मिन्काले समुपारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य क्षणमिव विचार्य स्वयमेव विहस्याचिन्तयत् । 'किमिति निरर्थकमयमात्मा मया

शिशुनेवायासितः । किमनेन गृहीतनागृहीतेन वा किंनरयुगलेन प्रयोजनम् । यदि गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम् । अहो मे मूर्खतायाः प्रकारः । अहो यत्किंचनकारितायामादरः । अहो निरर्थकव्यापारेष्वभिनिवेशः । अहो बालिशचरितेष्वासक्तिः । कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं भूमिमायातः । कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयमिति विचार्यमाणे सत्ययमात्मैव मे पर इव हासमुपजनयति । न जाने कियताऽध्वना विच्छिन्नमितो बलमनुयायि मे । महाजवो हीन्द्रायुधो निमेषमात्रेणातिदूरमतिक्रामति । न चागच्छता मया तुरगवेगवशात्किंनरमिथुने बद्धदृष्टिनाऽस्मिन्नविरलतरुशतशाखागुल्मलतासन्तानगहने निरन्तरनिपतितशुष्कपर्णावकीर्णतले महावने पन्था निरूपितो येन प्रतिनिवृत्य यास्यामि । न चास्मिन्प्रदेशे परिभ्रमता मया मर्त्यधर्मा कश्चिदासाद्यते यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति । श्रुतं हि मया बहुशः कथ्यमानमुत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिरिति । अयं च कैलासः । तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम् । **आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव'** इत्यवधार्य वामकरतलचालितरश्मिपाशस्तुरङ्गमं व्यावर्तयामास । निवर्तिततुरङ्गमश्च पुनश्चिन्तितवान् । 'अयमुद्भासितप्रभाभास्वरो भगवान्भानुरधुना दिवसश्रियो रशनामणिरिव मध्यमलङ्करोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं तावदागृहीतकतिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा

स्वयं च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्त्तमात्रं विश्रम्य ततो गमिष्यामि' इति ॥

Kádambarí.

## XXV.

## HOW FAR BUDDHA'S TEACHING IS AUTHORITATIVE.

यैर्मानवादिस्मृतीनामप्युत्सन्नवेदशाखामूलत्वमभ्युपगतं तान्प्रति सुतरां शाक्यादिभिरपि शक्यं तन्मूलत्वमेव वक्तुम्। को हि शक्नुयादुत्सन्नानां वाक्यविषयेयत्तानियमं कर्तुम्। ततश्च यावत्किंचित्कियन्तमपि कालं कैश्चिदाद्रियमाणं प्रसिद्धिं गतं तत्प्रत्यक्षशाखाविसंवादेऽप्युत्सन्नशाखामूलत्वावस्थानमनुभवत्तुल्यकक्षतया प्रतिभायात्। अत आह 'विरोधे त्वनपेक्ष्यं *स्यादिति'। पारतन्त्र्यं तावदेषां स्मर्यमाणपुरुषविशेषप्रणीतत्वात्तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादराच्च पार्श्वस्थैरपि ज्ञायते। वेदमूलत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्वेषिदुष्टपुत्रवन्नाभ्युपगच्छन्ति। अन्यच्च स्मृतिवाक्यमेकमेकेन श्रुतिवचनेन विरुध्येत। शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि, त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेदमूलत्वेन सम्भाव्यन्ते। स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्ममविप्लुतमुपदेक्ष्यतीति कः

---

* This is a sūtra from the Pu'rvamīmâmsâ.

समाश्वासः । उक्तं च । परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् । य आत्मानमतिसन्धत्ते सोऽन्यस्मै कथं हितः स्यादिति । बुद्धादेः पुनरयमेव व्यतिक्रमोऽलङ्कारबुद्धौ स्थितः येनैवमाह । 'कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां तु लोकः' इति । स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणैः स्तूयते तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते, एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः । 'या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः' इति । तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् ॥

Tantrava'rtika.

---

## XXVI.
## A TEACHER'S EXHORTATION TO HIS PUPIL.

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि

कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। ये केचनास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनः, युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः संमर्शिनः, युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन्, तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥

Taittiri'ya–Upanishad. I. 11.

# GLOSSARY.

## अ.

अंशुः A ray.
अंशुकम् Garment.
अंसः Shoulder.
अंहस् *n*. Sin.
अकण्टक *adj*. Free from enemies.
अकाण्डे *adj*. Unexpectedly.
अकौसीद्यम् ( अ+कौसीद्यम् sloth ) Absence of indolence.
अक्लिष्ट ( अ+क्लिष्ट *past p. p.* of क्लिश् ) Untroubled, unwearied.
अक्षम *adj*. Unable, unfit.
अक्षमा Impatience.
अक्षोटः A walnut tree.
अगाध *adj*. Unfathomable, deep.
अगारः-रम् House.
अग्निहोत्रम् The maintenance of sacred fire.
अग्रजः Elder brother.
अग्रजन्मन् *m*. A Brâhmana.
अग्रहारः Royal donation of land to Brâhmaṇas.
अङ्गम् A branch of knowledge auxiliary to the Vedas; they are six: शिक्षा, कल्प, व्याकरण, निरुक्त, छन्दस्, ज्योतिष.
अङ्गदम् An ornament worn on the arm.
अङ्गरक्षकः Body-guard.
अङ्गरागः Scented cosmetic.
अङ्गुलीयकम् ( or -लीयम् ) Ring.

अङ्घ्रिः The foot.
अचलः A mountain.
अजगरः A huge serpent, boa constrictor.
अजय्य *adj*. Impossible to conquer.
अजिनम् The skin of an antelope.
अञ्चलः The border or corner of a garment, especially of a woman's garment.
अञ्जनम् Black pigment or collyrium applied to the eyelashes.
अट्टः Tower, upper story.
अतर्कित ( अ+तर्कित *past p. p.* of तर्क् 10th *conj*. ) Unthought of;+ उपनत brought by chance.
अतिपातः Neglect, opposition.
अतियन्त्रणा Extreme constraint.
अतिशयः Pre-eminence, superiority.
अतिशयित ( *past p. p.* of शी *with* अति ) surpassed, excelled.
अतीन्द्रिय *adj*. Beyond the cognisance of the senses.
अत्यङ्कुशः *adj*. 'Gone beyond the (control of the) goad,' uncontrollable.
अत्यन्त *adj*. Endless; °न्तम् *adv*. to the end.
अत्ययः Passing away, perishing.
अत्याहितम् Great calamity.
अत्रभवत् *adj*. Honourable (used to indicate a person who is present).

**अदभ्र** *adj.* Much, great.
**अद्रिराज्** *m.* King of mountains, the Himālaya.
**अधिकारः** Office.
**अधिकृत** Placed at the head, appointed, referred to.
**अधिष्ठातृ** *m. n.* (त्री *f.*) One who superintends or supervises.
**अधिष्ठानम्** Standing upon, resting upon.
**अधीतिन्** *adj.* One who has mastered or studied (governs the loc.).
**अध्यवसायः** Mental effort; determination, undertaking.
**अनङ्गः** Cupid.
**अनतिक्रमणीय** (अ+अतिक्रमणीय *pot. p. p.* of क्रम् *with* अति) what cannot be transgressed.
**अनतिपात्य** (अ+अतिपात्य *pot. pass. p.* of the causal of पत् *with* अति) not fit to be neglected.
**अनन्यजः** Cupid, God of love.
**अनपेक्ष्य** To be disregarded.
**अनभ्यन्तर** *adj.* (अ+अभ्यन्तर) Not conversant with.
**अनभ्यासः** Want of practice.
**अनभ्र** *adj.* Cloudless.
**अनयः** Wrong-doing, unjust act.
**अनर्घ्य** Invaluable.
**अनवद्य** *adj.* (अ+अवद्य censurable) Blameless, perfect.
**अनवसित** (अ+अवसित *past p. p.* of सो *with* अव) Not finished.
**अनवहेल** *adj.* (अ+अवहेला disrespect) Not disrespectful.
**अनिभृत** *adj.* Not silent, loud.
**अनिमिष** *adj.* Not closing the eye, not winking.
**अनीशः** One who is not master of, one who has no control over.
**अनुख्यातिः** Pointing out, revealing, reporting.
**अनुगीता** Name of a philosophical treatise contained in the Mahābhārata.
**अनुजः** Younger brother.
**अनुजिघृक्षा** (from the Desiderative of ग्रह् *with* अनु) Desire to favour.
**अनुतापः** Repentance, regret.
**अनुत्सेकिनी** *adj. f.* Not proud.
**अनुनादः** Echo.
**अनुपरीत** (*past. p. p.* of इ *with.* अनु and परि) Surrounded.
**अनुप्रपन्न** (*past p. p.* of पद् *with* अनु and प्र) Following after.
**अनुमतिः** Consent, permission.
**अनुयात्रिकः** Follower.
**अनुरञ्जित** (*past p. p.* of the causal of रञ्ज् *with* अनु) Coloured; pleased.
**अनुरोधः** Compliance, respect.
**अनुविद्ध** (*past p. p.* of व्यध् *with* अनु) Full of, abounding; pierced; set.
**अनुशयः** Repentance, regret.
**अनुशासनम्** Precept.

अनुशिष्ट ( *past p. p.* of शास् *with* अनु ) Taught. [ quence.

अनुषङ्गः Connection, conse-

अन्वर्थ *adj*. Significant.

अनूप *m. plu.* Name of a country which was full of water.

अनृण *adj*. Free from debt.

अनेहस् *m*. Time.

अन्तरम् Hole, opening, opportunity, weakness. अन्तरं लभ् to enter, make an impression.

अन्तरा *adv*. On the way.

अन्तरायः An obstacle.

अन्तरित ( *past p. p.* of इ *with* अन्तर् ) Screened, concealed.

अन्तर्वत्नी Pregnant.

अन्तेवासिन् *m*. pupil.

अन्त्य *adj*. Last, lowest, most wretched.

अन्धगृहम् Dark room.

अन्वयः Family.

अन्ववायः Family.

अपकोश *adj*. Unsheathed.

अपचारः Bad conduct.

अपचितिः Honour, worship.

अपत्रप *adj*. Shameless, lost to the sense of shame.

अपदेशः Pretext.

अपरम् *ind*. Again, moreover.

अपरान्तः The Western extremity; country on the west coast of India.

अपवर्जित ( *past p. p.* of the caus. of वृज् *with* अप ) Abandoned, got rid of.

अपवादिन् *adj*. One who abuses.

अपशब्दः Vulgar speech, ungrammatical language.

अपहारः Concealment. आत्मापहारं कृ to conceal one's real character.

अपाकृत ( *past p. p.* of कृ *with* अप and आ ) Removed.

अपाङ्गः Corner of the eye.

अपूपः A cake.

अप्रजस् ( अ+प्रजा ) *adj*. Childless.

अप्रतिलोम *adj*. ( अ+प्रतिलोम 'against the grain,' unfavourable, contrary ) Not unfavourable, tractable, docile.

अप्रतिवार्य ( अ+प्रतिवार्य ) *pot. p. p.* ) What cannot be resisted, irresistible. [ vigilant.

अप्रमादिन् *adj*. Not careless,

अप्रमेय ( अ+प्रमेय *pot. pass. p.* of मा *with* प्र ) Immeasurable, infinite.

अप्रशमः Disturbance, perturbation, excitement. [ alone.

अब्भक्ष *adj*. Subsisting on water

अब्रह्मण्यम् A sacrilegious act; ( in theatrical language an exclamation meaning 'help' &c. )

अभव्य *adj*. Improper, inauspicious.

अभिख्या Name.

अभिजात ( *past. p. p.* of जन् *with* अभि) Noble; fit.

अभिज्ञानम् Recognition.

अभिधेय ( *pot. pass. p.* of धा

*with* अभि ) What is to be spoken.

अभिनव *adj*. Fresh, new.

अभिनिवेशः Perseverance, determination.

अभियोगः Attack, war.

अभिरतिः Pleasure, practice.

अभिराम *adj*. Charming.

अभिरूप *adj*. Well-formed; wise.

अभिव्यक्त Manifested.

अभिषङ्गः Contact, connection.

अभिसन्धिः Purpose, intention.

अभिसारः Companion, follower.

अभीक्ष्णम् *adj*. Often and often; continuously.

अभीप्सु *adj*. अभि+ईप्सु, from the Desiderative of आप् ) Desirous of obtaining.

अभीषुः Reins.

अभीष्ट ( *past p. p*: of इष् *with* अभि ) Desired, liked, favourite.

अभ्यक्त ( *p. p. p*. of अञ्ज् with अभि ) Besmeared.

अभ्यङ्गः Smearing the body with [ oil.

अभ्यन्तरीकृ To make a near friend, familiarize.

अभ्यर्ण *n*. Proximity, vicinity.

अभ्याख्यात *adj*. Accused, calumniated.

अभ्याशः ( or–सः ) Vicinity.

अभ्युदयः Prosperity, good.

अभ्युपगत ( *past p. p*. of गम् *with* अभि and उप ) Accepted, admitted.

अभ्युपपत्तिः Acceptance, favour.

अभ्युपायः Remedy, expedient.

अमरावती Capital of Indra.

अमर्षः Wrath, resentment.

अमित्रः An enemy.

अमृतदीधितिः The moon.

अमेध्य *adj*. Impure.

अम्बरमणिः 'The jewel in the sky,' the sun.

अयस् *n*. Iron.

अयुतम् Ten thousand.

अरविन्दम् A lotus ( that expands by day ).

अरातिः An enemy.

अर्कः A kind of plant, Calotropis Gigantea.

अर्गलः-लम् A wooden bolt for fastening doors.

अर्घः Respectful offering.

अर्घ्यम् Respectful oblation to gods or venerable men of rice, flowers &c. [ son of Atri.

अर्चनानस् *m*. Name of a sage,

अर्चा Worship.

अर्चिस् *n. f*. Flame.

अर्थ् *with* सम् 10 ( usually A. ) To establish, suggest.

अर्थवत् *adj*. Significant, full of meaning. [ praise.

अर्थवादः Explanatory remark,

अर्वाक् *adv*. ( governs abla. ) After, downwards.

अर्हत् ( *pr. p*. of अर्ह् ) Deserving, worthy.

अर्हणा Worship, honour.

अलक *m.* ( generally *plu.* ) Hair.
अलका Capital of Kubera.
अलम् *ind.* Enough, away with ( governs the Instrumental ).
अलिन्दः A terrace before a house-door.
अलीक *adj.* False.
अलूक्ष *adj.* ( or अरूक्ष ) Soft.
अवकर्तनम् Cutting off.
अवकीर्ण ( *past p. p.* of कॄ *with* अव ) Spread, scattered.
अवगाढ ( *past p. p.* of गाह् *with* अव ) Plunged.
अवगुण्ठनम् Veil.
अवतंसः An ear-ornament.
अवतारः A landing place; sacred place, pond.
अवदात *adj.* White, pure, noble.
अवधिः Limit, termination.
अवधीरणम् Disregarding, not minding.
अवधूत ( *past p. p.* of धू *with* अव ) Disrespected, rejected, scorned.
अवभृथः Purification by bathing of the sacrificer and the sacrificial vessels after a sacrifice.
अवरजः A younger brother ;–जा *f.* a younger sister.
अवरोधः Harem, the women's apartments.
अवलेपः Pride, vanity.
अववदितृ *m.* Arbitrator.
अवश *adj.* Independent ; helpless.
अवसन्न ( *past pass. p.* of सद् *with* अव ) Sunk down, terminated.
अवसानम् End.
अवहित ( *past. p. p.* of धा *with* अव ) Attentive, vigilant.
अविक्षत ( अ+विक्षत *p. p. p.* of क्षण् *with* वि ) Unwounded.
अविनीत ( अ+विनीत ) Impudent, naughty, rash.
अविप्लुत Observed without deviation, unviolated.
अविश्रम *adj.* Without rest.
अवेक्षा Regard.
अव्यातिरिक्त ( अ+व्यतिरिक्त *past p. p.* of. रिच् *with* वि and अति ) Not different from.
अव्यक्त *adj.* Indistinct.
अव्यभिचारिन् *adj.* Never failing.
अव्यय *adj.* Inexhaustible.
अश् *with* प्र 9 P. To eat, consume, taste.
अशनिः *m. f.* Thunderbolt, lightning, missile.
अशरीरिन् *adj.* Incorporeal.
अशालीनता ( अ+शालीनता coyness ) Want of bashfulness.
अश्वतरी A mule.
असंविदान ( अ+संविदान *present p.* of विद् *with* सम् 2 Atm. ) Not knowing.
असवर्ण *adj.* Of a different caste.
असेचनक *adj.* That on which one cannot look enough, lovely.
अस्ताचलः The western mountain behind which the sun sets.

अस्रम् Tear.
अहङ्कारः Egotism.
अहमहमिका Egotism, emulation.

आ.

आकारणम् Calling.
आकुलित *adj.* Agitated.
आकूणित (आ a little +कूणित *from* कूण् 10) A little contracted or closed.
आकूतम् Meaning, purpose.
आकेकर *adj.* (आ+केकर) A little squint-eyed.
आखण्डलः Indra.
आगन्तुक *adj.* Accidental, stray.
आगमः Coming; sacred writings.
आघातः Stroke.
आचार्यकम् The proficiency of a holy teacher.
आच्छुरित (*past p. p.* of छुर् *with* आ) Scratched, cut. [breed.
आजानेयः A horse of the best
आज्ञाकर *adj.* Obedient.
आटोपः Puffing, pride.
आढ्य *adj.* Rich.
आतङ्कः A disease.
आतपत्रम् Umbrella.
आतिथेय *adj.* Proper for a guest, hospitable.
आतुर *adj.* Distressed; *m.* a patient. [Taken.
आत्त (*past p. p.* of दा *with* आ)
आत्ममानिन् *adj.* Self-respecting.
आत्मसात्कृ To bring under one's control.

आदानम् Taking, drawing away near.
आदित्सु *adj.* (from the Desiderative of दा with आ) Desirous of taking.
आदेशः Advice, instruction.
आधानम् Ceremony performed with consecrated fire. [bane.
आधिः Mental trouble, calamity,
आध्यात्मिक *adj.* Relating to the soul, spiritual. [obligation.
आनृण्यम् Acquittance of debt or
आप् *with* सम् To obtain completely, fulfil, reach.
आपगा A river.
आपणः Market-place.
आपन्नसत्वा A pregnant woman.
आपातः Appearance, the current moment; आपातरमणीय agreeable at first sight.
आपानम् A drinking party; tavern.
आपीडः A garland, chaplet tied on the crown of the head.
आपोदः Son of Apoda.
आभ (at the end of compounds) Resembling.
आभरणम् Ornament; +भृत् *adj.* wearing an ornament.
आमयः A disease.
आमुक्त Put on, dressed.
आमृष्ट (आ+मृष्ट *past p. p.* of मृज्) Rubbed.
आमोदः Fragrance.
आम्नातिन् *adj.* One who has

learnt or committed to memory (governs loc. ).

आम्रेडित *adj.* Repeated; *n.* A repeated sound or word.

आयत ( *past p. p.* of यम् *with* आ ) Long, stretched.

आयतनम् Resting place, abode, sanctuary.

आयस *adj.* Made of iron.

आयुक्त Appointed, united.

आरण्यक *adj.* Relating to a forest; *m.* an inhabitant of the woods.

आरावः Cry, noise.

आरोहः Altitude, elevation.

आर्तिः Distress; + हर *adj.* one who removes pain.

आर्त्विज्यम् The office of ऋत्विज्.

आर्द्र *adj.* Wet, fresh, full of life.

आर्ष *adj.* Belonging to the Rishis of old.

आलक्षित ( *past p. p.* of लक्ष् 10 P. A. *with* आ ) Observed, visible, a little visible.

आलक्ष्य A little visible.

आलपनम् Talk.

आलम्बः Support.

आलयः House.

आलवालम् Basin for water round the root of a tree.

आलानम् The post to which an elephant is tied.

आली (-लिः also ) A row.

आलोकः Sight, look.

आलोचनीय (*pot. pass. p.* of लोच् *with* आ 1. A. ) To be seen or considered.

आवसथः Dwelling-place.

आविल *adj.* Turbid.

आविष्करणम् Making clear, elucidation.

आविष्ट ( *past p. p.* of विश् *with* आ ) Possessed ( by a demon ), entered, filled with.

आशा Hope; direction.

आश्यान ( *past p. p.* of श्यै 1 A. *with* आ ) Coagulated.

आश्वीयम् A number of horses.

आस् *with* अनु To be engaged in.

आसन्न ( *past p. p.* of सद् *with* आ ) Near; +परिचारकः Personal attendant.

आसवः Spirit distilled from sugar or molasses.

आस्तरणम् Covering, carpet.

आस्पदम् Place, abode.

आस्फालनम् Striking, lashing.

आहरणम् Bringing near.

आहित ( *past p. p.* of धा *with* आ ) Placed, put; + लक्षण one to whom a characteristic name is given.

आहिताग्निः One who has kept alive sacred fire perpetually in a family.

आहोस्वित् *ind.* Or.

आह्निकम् A religious ceremony to be performed every day at a fixed hour.

## इ.

इ *with* अति To transgress, to go beyond, to pass.

इ *with* अधि 2 P. To think of, to remember (governs the Genitive of the object, according to अधीगर्थदयेशां कर्मणि पा. II, 3. 52.).

इ *with* प्रति To believe.

इन्द्रनील: Sapphire.

इन्द्रायुधम् The rain-bow;–धः Name of a horse.

इभः An elephant.

इयत्ता Quantity, fixed measure.

इष्टिः Sacrifice.

## ई.

ईक्ष् *with* प्र and सम् To perceive, reflect upon.

ईप्सित (*past p. p.* of the Desiderative of आप्) Desired.

ईर् (causal) *with* उद् To speak, utter.

ईषत् *adv.* A little.

## उ.

उक्ष् *with* अभि 6 P. A. To besprinkle.

उच्चैःश्रवस् *m.* Epithet of the horse of Indra, produced at the churning of the ocean.

उच्छित्तिः Destruction.

उच्छ्रित (*past p. p.* of श्रि *with* उद्) High, elevated.

उज्झ् 6 P. To abandon.

उडुपतिः Lord of Nakshatras *i. e.* the moon.

उत्कलाः *m. plu.* Name of a country, modern Orissa.

उत्क्रान्त (*past p. p.* of क्रम् *with* उद्) Gone forth, gone beyond, passed.

उत्क्षेपः Tossing up, sending.

उत्तमाङ्गम् The head.

उत्तम्भित (*past p. p.* of स्तम्भ् *with* उद्) Upheld, stopped, erect.

उत्तरकोसलाः Name of a country [round Ayodhyá.

उत्तरासङ्गः Upper garment.

उत्तरीयम् Upper garment.

उत्तान *adj.* Open.

उत्थानम् Effort, manly exertion.

उत्पतिष्णु *adj.* Rising up.

उत्पातः A portent, prodigy.

उत्सन्न (*past p. p.* of सद् *with* उद्) Destroyed, lost.

उत्सर्गः Giving up.

उत्सवसङ्केत *m. plu.* Name of a [people.

उत्सेकः Vanity, conceit.

उदग्र *adj.* High, tall, long.

उदन्तः Account, news.

उदन्वत् *m.* The ocean.

उदर्कः End, result.

उदायुध *adj.* One with an uplifted weapon.

उदार *adj.* Generous, great, fine.

उदीर्ण Excited; intense, great.

उद्गारः Emitting.

उद्गाल: A hook. [ beginning.
उद्घात: Slipping, tripping;
उद्घातिनी Uneven, having ups and downs. [ fierce.
उद्दाम *adj*. Unrestrained, great,
उद्देश: Spot, place. [ zoned.
उद्द्योतित Lighted up, embla-
उद्भासित ( *past p. p.* of भासय् *with* उद् ) Splendid, illuminated.
उद्भ्रान्त ( *past p. p.* of भ्रम् *with* उद् ) Agitated. [ distraction.
उन्माद: The unsettling of mind,
उपकण्ठम् Proximity.
उपकरणम् Instrument, apparatus, paraphernalia.
उपगत ( *past p. p.* of गम् *with* उप ) Met, obtained, experienced. [ behaviour.
उपचार: Act of civility, polite
उपचित ( *past p. p.* of चि *with* उप ) Collected, heaped up, smeared.
उपच्छन्दित Coaxed. [ a hill.
उपत्यका Land at the foot of
उपदा *f*. A present.
उपधानम् Pillow.
उपनिपात: Befalling.
उपन्यास: Statement, suggestion, introduction.
उपरम: Cessation.
उपरोध: Obstruction.
उपल: Stone.
उपलक्षित ( *past p. p.* of लक्ष् *with* उप ) Marked, recognised.
उपसङ्ग्रहणम् Respectful salutation ( by clasping the feet of a person with the hands ).
उपस्थ: The middle part.
उपहार: Present.
उपान्तम् Border, edge.
उपायनम् Present.
उरग: A serpent, snake.
उल्का Meteor, falling-star.
उल्लिखित ( *past p. p.* of लिख् *with* उद् ) Rubbed.
उल्लोल *adj*. Very restless.
उष्णतेजस् *m*. The sun.
उस्र: Ray.

## ऊ.

ऊर्मि: *m. f.* A wave.
ऊष्मपा *m*. A spirit of an inferior order; –प *adj*. imbibing heat.

## ऋ.

ऋक्ष: A bear.

## ए.

एकाग्र *adj*. Concentrated.
एकान्तम् *adj*. Solely; exclusively.
एतर्हि *ind*. At present.
एधित ( *past p. p.* of एध् ) Grown.
एला Cardamom.

## ऐ.

ऐकाग्र्यम् Concentration of mind.
ऐन्द्री *adj*. Eastern.

## ओ.

ओकस् *n*. House, abode.

## औ.

**औत्पातिक** *adj.* Portentous, calamitous; *n.* a portent.

## क.

**ककुत्स्थः** Name of a king of the solar race, an ancestor of Rama. [ bull; the best.

**ककुदम्** or **–दः** The hump of a

**कक्षा** A court, court-yard, secluded portion of an edifice.

**कङ्कालः–लम्** A skeleton.

**कच्चित्** *ind.* ( interrogative in form ) implies ' I hope '.

**कञ्चुकः** A dress closely fitting the upper part of the body, bodice.

**कटः** The temple of an elephant.

**कटकः–म्** Army, camp, circle.

**कणिका** A small particle.

**कण्डूल** *adj.* Itchy.

**कदम्बकम्** A multitude.

**कदर्थनीय** ( *pot. pass p.* of **कदर्थय्** a nominal verb from **कदर्थ** ) one who deserves to be treated lightly.

**कदली** The plantain tree.

**कन्दरः–रम्** Valley, cavern.

**कन्दर्पः** Cupid. [ banana tree.

**कन्दली** Fresh sprouts; the

**कन्धरा** Neck.

**कपालः–लम्** The skull.

**कपालिनी** The goddess Durgâ as the wife of S'iva in his form of a Kapâlin.

**कपिध्वजः** ' One on whose banner there is a monkey,' Arjuna.

**कपिलः** A sage; *adj.* brown.

**कपोतः** Spotty- necked pigeon.

**कम्प्र** *adj.* Trembling.

**करः** Tribute, tax.

**करङ्कः** A coccanut hollowed to form a cup or vessel.

**करजः** A finger-nail.

**करणम्** Sense-organ.

**कररुहः** A finger-nail.

**करवालः** A sword.

**कराल** *adj.* Terrible.

**करेणुः** A female elephant.

**कर्णधारः** Steersman, captain.

**कर्णिकारः** A tree ( **कण्हेर** Mar. ).

**कर्दमः** Mud. [ earthen pot.

**कर्परः** A cup, a pot, a broken

**कर्मभूमिः** Land of religious actions ( as opposed to worlds where the fruits of those actions are to be enjoyed ).

**कलः** A sweet but indistinct sound; *adj.* sweet but indistinct.

**कलभः** A young elephant.

**कलमः** A kind of rice.

**कलापः** Mass, band. [ arts.

**कलावत्** *adj.* Proficient in the

**कलिः** Name of the die or side of a die which is marked with one point; the Die personified.

**कलिङ्गः** *m. plu.* Name of a country on the eastern coast of

Madras stretching from the Mahânadî to the mouth of the Kṛishṇâ.

कलुष *adj*. Foul, bad, wicked.

कल्प An affix used at the end of compounds, meaning 'almost like.'

कल्पः Practice, sacred precept prescribed by the Vedas; +सूत्रम् an aphoristic work dealing with Vedic ritual.

कल्पः A fabulous period of time, one day of Brahmâ or 1000 Yugas.

कल्पय् ( causal of क्लृप् ) *with* परि To fix, arrange.

कवचम्–चः Coat of mail.

कवलः Mouthful.

कशा A whip, rope.

कषाय *adj*. Fragrant.

काकली A low sweet tone.

काञ्ची Girdle, belt.

कातर *adj*. Timid, afraid.

कान्तारः–म् A wood.

कापालिकः A worshipper of S'iva characterized by wearing human skulls and eating and drinking from them.

कामः Desire, Cupid, god of love.

कामम् *adv*. Granted.

कामरूप *m. plu.* Name of a country, lying to the east of Bengal; Western Assam.

कामरूपिन् *adj*. Taking any shape at will.

काम्बोज *m. plu.* Name of a people or a country.

कारण्डवः A sort of duck.

कारा Confinement; + अगारम् Gaol, place of confinement.

कार्तस्वरम् Gold.

कार्त्स्न्यम् Totality.

कार्पण्यम् Wretchedness.

कार्मुकम् Bow.

काल *adj*. Dark, black.

कालकूटम् Deadly poison.

कालागुरु *n*. A black kind of aloe wood or Agallochum.

कालिङ्गः King of Kaliṅga.

काषाय *adj*. Red.

काष्ठा Limit, boundary.

किंकर्तव्यतामूढ Being at a loss what to do.

कितवः A rogue.

किन्नरः Kind of a semi-divine being with a human figure and the head of a horse.

किराताः Name of a barbarous mountain tribe.

किरीटः–म् A crown, tiara.

किंवदन्ती Rumour.

किसलयम् Tender leaf.

कीचकः A kind of bamboo that produces a creaking sound when the wind strikes against it.

कुङ्कुमम् Saffron.

कुटुम्बिनी Wife.

कुट्टिमः–मम् Paved floor, ground paved with mosaic or small stones.

कुड्यम् A wall. [ coiled.
कुण्डलीकृत Formed into a ring,
कुतूहलम् Curiosity.
कुतूहलिन् *adj.* One who has a curiosity. [ doctrine.
कुदृष्टिः Heterodox philosophical
कुदेशः Worthless country.
कुन्तः A lance.
कुन्दम् A kind of flower.
कुमुदम् A white lotus ( that opens in the night. )
कुरङ्गः Deer.
कुरबकः A crimson species of amaranth; a purple or yellow sort of barleria. [ osprey.
कुररी A kind of bird, female
कुलपतिः The head of an academic institution.
कुलायः-यम् Nest.
कुलूत *m. plu.* Name of a country or its people.
कुशाग्रम् Sharp point of the blade of Kus'a grass; +धी *adj.* shrewd, sharp.
कुसुमाकरः Parterre, garden; vernal season.
कुहरम् A cavity; hollow.
कूजितम् ( *past p. p.* of कूज् I P. ) Indistinct sound, cooing.
कूलम् Bank, shore.
कृ *with* सम् and आ To put together, make ready.
कृच्छ्रम् Difficulty, pain; कृच्छ्रात् with difficulty.
कृत् with उद् 6 P. To cut out.

कृतक *adj.* Feigned, false; adopted ( as a son ).
कृतविद्य *adj.* One who has acquired knowledge, well-informed.
कृतागस् *adj.* One who has committed a fault.
कृतार्थ *adj.* Blessed.
कृतिन् *adj.* Happy, blessed.
कृपाणः Sword.
कृशानुः Fire.
कृष्णवर्त्मन् *m.* Fire.
कृष्णशवासिन् *m.* A man dressed in blackish dress ( some say that the person meant is Rudra ).
कृष्णा A name of Draupadí.
क्लृप् 1 A. To be able, tend to; ( caus. ) set in order, prepare; cut asunder.
केतनम् Abode.
केतुः Banner.
केरल *m. plu.* Name of a people or a country, modern Malabar.
केसरः-रम् The filament of a lotus or other plants; *n.* hair.
केसरिन् *m.* ( or केशरिन् ) A lion.
कोलाहलः A great noise, hue and cry.
कोविद *adj.* Proficient.
कोशः Treasure; cup, bud; sheath.
कोषः ( -शः also ) store-room; treasury.
कौतुकम् Curiosity, admiration.
कौतूहलम् Curiosity, interest.

कौपीनम् A small piece of cloth worn over the privities by poor persons.

कौबेरी *adj.* Presided over by Kubera, northern.

कौशेयम् Silk cloth, silk petticoat or trousers; *adj.* silken.

क्रतु A sacrifice.

क्रम् *with* आ To step upon, approach, seize, conquer; *with* प्र ( usually Atm. ) begin, proceed; *with* वि to fight; *with* सम् ( causal ) to transfer.

क्रमुकः The Areca or betelnut [ tree.

क्रीडनकम् A toy.

क्लमः Fatigue, languor.

क्षणः Appointment or appointed time, festival.

क्षत ( *p. p.* of क्षण् ) Wounded, [ destroyed.

क्षत्रम् The military order, a man of the Kshatriya caste.

क्षपा Night.

क्षम *adj.* Patient, competent, [ able, fit.

क्षाम *adj.* ( from क्षै ) Exhausted, scorched.

क्षिप् *with* अधि To insult, treat [ with contempt.

क्षीरोदः The sea of milk; sea in general.

क्षुण्ण ( *past p. p.* of क्षुद् ) Trod- [ den, beaten.

क्षेत्रम् Land; wife.

क्षेपणीयम् A sling.

क्षेम *m. n.* Safety, peace.

क्षेमकर *adj.* Conferring happiness or fortune.

क्षेमेण *adv.* Safely.

क्षौद्रम् Honey.

क्ष्मा The earth.

## ख.

खम् Sky.

खगः A bird.

खन् *with* नि To plant, bury; *with* उद् to uproot.

खरः Name of a demon.

खर्जूरी The wild date tree.

खलीकृ To treat badly, scorn.

खलीनः-नम् The bit of a bridle.

खेचरः A bird.

ख्या *with* प्रति and आ To reject.

## ग.

गणकः An astronomer; astrologer.

गणना Calculation, account; का गणना ( with loc. ) of what account ?

गण्डः Cheek, elephant's temple.

गतिः Path, course; refuge, state.

गत्वर *adj.* Perishable, moving.

गन्धवहः The wind.

गमनीय ( *pot. p. p.* of गम् ) Ac- [ cessible.

गरुत्मत् *m.* Garuḍa, the vehicle of Vishṇu.

गर्भः Fœtus, embryo.

गर्भित *adj.* Full, filled.

गवेषिन् *adj.* Searching.

गव्यूतिः *f.* A distance of two Krôs'as or four miles.

गह्वरम् Cavern, depth.

गाध *adj.* Fordable, shallow.

गायत्री Name of a Vedic metre.
गीतिका Name of a metre.
गुणः Quality; thread, fibre.
गुणाः The six proper courses of action for a king.
गुरुः Teacher, any elderly person, father.
गुरुत्वम् Importance. [ bush.
गुल्मः-म् ( also गुल्मक ) A thicket,
गुह् with नि 1. P. A. ( निगूहति-ते ) To conceal, hide.
गृध्रः A vulture.
गृहाः ( *m. plural* ) House.
गोकर्णः A place of pilgrimage on the Malabar coast sacred to S'iva.
गोपुरम् The gate of a city.
गोष्ठी Assembly.
गौडाः Name of a country, central Bengal. [ brilliant.
गौर *adj.* White, pure; reddish,
गौरवम् Estimation, respect shown to a person.
ग्रह् with उप To take, bring near to, decide, accept.
ग्राम्य *adj.* Allowed in a village, relating to the sensual pleasures of a village. [ crocodile.
ग्राहः A rapacious water animal,

घ.

घट् 1 A. To be busy with, reach, to be possible; caus. accomplish, exert; *with* उद् to expose, open,
घट् *with* वि 1 A. To become separate, burst. [ about.
घटना Accomplishing, bringing
घट्ट् 10 P. A. *with* अव To touch, rub.
घन *adj.* Thick.
घनसारः Camphor.
घर्मांशुः The sun.
घोषणा Proclamation.
घ्रा *with* उप and आ ( 1 P. जिघ्रति ) Smell at, kiss.

च.

चक्रम् Multitude, heap.
चक्रम् The wheel, the lathe.
चक्रवर्तिन् *m.* A sovereign lord.
चक्रायुधः ( चक्रं आयुधं यस्य ) Name of Vishṇu.
चङ्क्रम्यमाण ( *pr. p.* of the Frequentative of क्रम् ) Wandering about.
चटुल *adj.* Tremulous, moving.
चतुर्वदनः The god Brahma.
चन्द्रचूडः 'One who has the moon on his head', S'iva.
चन्द्रशिला A kind of gem, moonstone ( चन्द्रकान्त ).
चर् *with* अति To offend, be unfaithful to; *with* उप to attend upon, tend; *with* वि and अभि to fail, deviate, go wrong.
चरितार्थ *adj.* Attaining one's object, satisfied.
चर्या Practice, behaviour.

चाटु *m. n.* Pleasing words, flattery ; चाटूक्तिः agreeable language, flattery. [ rashness.
चापलम् Unsteadiness of mind,
चामरम् A chowrie, the bushy tail of the Bos Grunniens.
चारः Spy, detective.
चारित्रम् Good conduct.
चिकीर्षितम् ( *past p. p.* of the Desiderative of कृ ) What is desired to be done or about to be done.
चित्तवत् *adj.* Endowed with understanding ; possessed of a strong mind.
चित्र *adj.* Strange, wonderful ; किमत्र चित्रम् what wonder is there, what is surprising in that ?
चित्रभानुः Fire.
चीरम् A strip of cloth, rag.
चूडा The hair on the top of the head ; head, top.
चूडामणिः Crest-jewel ; the best.
चूतः Mango-tree.
चूर्णम् Powder; fragrant powder ; pounded sandal.
चेटी A female servant.
चेदि *m. plu.* Name of a country near modern Bundelkhand.
चेलम् Garment, raiment.
चेष्ट् 1 P. A. *with* वि To wallow, writhe.
चैत्ररथम् Name of a garden belonging to Kubera.
चोदित ( *past p. p.* of चुद् 10 ) Driven, ordered.
च्युति Falling, deviating, dying.

छ.

छत्रम् Umbrella, + ग्राहिणी Umbrella-bearer.
छद्मन् *n.* Trick, disguise.
छन्दः Intention, liking.
छन्दोविचितिः Name of a work on metres, ascribed to Piṅgala.
छाया Brilliance, complexion.
छिद्रम् A hole, interruption, defect, weak point.
छुरिका A knife.

ज.

जङ्घा The upper part of the leg.
जटिल *adj.* Complicated, twisted, confused.
जनपदः A country.
जनवादः Scandal, discussion.
जनस्थानम् Name of a part of the Daṇḍakā forest.
जन्मपत्रिका Horoscope.
जन्यम् Battle.
जन्यः A friend of the son-in-law; जन्या A bride's maid.
जप्यम् A prayer to be uttered in a low voice.
जम्भारिः Name of Indra.
जयोदाहरणम् Declaration or publication of victory.
जलक्रिया Presentation of water to dead ancestors.

जवः Speed.

जह्नुः Name of a sage.

जातम् Multitude.

जातकर्मन् *n.* A ceremony at the birth of a child when the navel-string is divided.

जातिस्मरः Remembering one's condition in a former life.

जानु *m. n.* The knee.

जाप्यम् A prayer to be muttered inaudibly.

जाम्बूनदम् Gold.

जिगीषा Desire to conquer.

जिज्ञासमान ( *pr. p.* of the Desiderative of ज्ञा ) Desirous of knowing ( जिज्ञास् takes Atm. ).

जिष्णुः Arjuna.

जीवितव्यम् Possibility of living.

जुष्ट ( *past p. p.* of जुष् 6 A. ) practised, served, worshipped.

जृम्भ् 1 A. To yawn, spread, expand.

जृम्भा-जृम्भिका Yawn.

जोषम् *adv.* Silently. [ kindred.

ज्ञाति *m.* Paternal relation,

ज्ञापय् ( causal of ज्ञा ) *with* प्र To show, point out the way.

ज्येष्ठामूलीयः The month of Jyeshṭha. [ Astronomy.

ज्योतिस् *n.* Star, science of

ज्वरः Fever.

त.

तक्ष् *with* निर् 1 P. To reprove, ( but 1 and 5 conj. when it means 'to pare' literally ).

तडित् *f.* Lightning.

तत is used in the Vedic language as equal to तात vocative.

ततिः Series, line, number.

तथागतः Buddha.

तथाहि *ind.* For instance.

तनिमन् *m.* Slenderness.

तन्त्रम् Government.

तन्द्रा Lassitude, sleepiness.

तपस्य ( तपस्यति nominal verb ) To practise penance.

तरलता Unsteadiness of mind.

तरस् *n.* Speed, velocity.

ताण्डवम् Dancing.

तामरसम् A lotus.

ताम्रपर्णी Name of a river rising in Malaya ( the river is celebrated for its pearls ).

तारकराजः The moon.

तारका The pupil of the eye.

तारम् *adv.* Loudly. [ Vishṇu.

तार्क्ष्यः Eagle, the vehicle of

ताली A kind of palm tree.

तिरस्करिणी A screen; a kind of magical veil rendering the wearer invisible.

तिलकः-म् Mark made on the forehead.

तुङ्गः *adj.* Tall, high.

तुला Weight, balance.

तुषाराद्रिः Mountain Himâlaya.

तूणीरः-रम् Quiver.

तूर्यः-म् A musical instrument.

तूष्णीम् *adj.* Silent.

तोरणम्-णः An arch, arched portal.

त्यागिन् *adj*. Generous, liberal.

त्रपा Shame.

त्रयी The three Vedas, ऋग्वेद, यजुर्वेद, सामवेद.

त्रासः Fright, fear.

त्रिगुणात्मिका Constituted by the three Guṇas सत्त्व, रजस् and तमस्.

त्रिदशः God; + पतिः Indra.

त्रिदिवः Heaven.

त्रिविष्टपम् Heaven.

## द.

दक्षिण *adj*. Courteous.

दक्षिणेन *adv*. To the south (governs acc. or geni.).

दण्डः Army; a long line of troops; punishment, the rod as a symbol of authority; +धारणम् Punishment; + नीतिः Science of polity, the doctrine of the right administration of government.

दम्यः A colt, a young bullock

दयिता Wife, beloved.

दर्शनम् Actual experience; direct perception; vision.

दलम् A leaf.

दलित (*past p. p.* of दल् 1 P.) Trodden down, crushed, destroyed.

दशनः Tooth.

दशार्णाः Name of a country, south-east of मध्यदेश, in the centre of Hindustan.

दशास्यः Ravaṇa.

दस्युः Thief.

दा *with* वि and आ To open, expand.

दाक्षिण्यम् Courtesy.

दामन् *n*. A string, wreath.

दायादः (दायमत्ति or आदत्ते) Kinsman, relative.

दावः Forest, conflagration.

दाशः A fisherman.

दिग्वासस् *adj*. Naked.

दित्सु *adj*. (from the Desiderative of दा) About or wishing to give.

दिव् 4 P. To play, to gamble, (governs the acc. or instru.).

दिवस्पतिः Indra.

दिवाकरः The sun.

दिश् *with* निर् To point out; with प्रति and आ to repel, deny, overcome.

दिष्ट्या *adv*. (instru. of दिष्टि *f*. fortune) Fortunately; दिष्ट्या वृध् to congratulate upon.

दीधितिः *f*. Ray.

दीनारः (from the Roman Denarius) A coin.

दुकूलम् Very fine silk cloth.

दुरक्षः A fraudulent die.

दुरवस्था Wretched condition.

दुर्ग्रहः Spasm; evil demon.

दुर्जात *adj*. Inauspiciously born, wretched.

